| | | |
|---|---|---|
| | कृष्यां क्षेत्रर्षयो ऽन्व् आनृधुर् मयि देवा राष्ट्रभृतस् तद् अक्रन् ॥७॥ | * * * आनधुर ... |
| | मयि वर्चो मयि श्रवो मयि द्युम्नं मयि त्विषिः । | * * * द्युवो... |
| | अधस्पदं पृतन्यवो [अ]हं भूयासम् उत्तमः ॥८॥ ॥का॰४॥ | * पृतन्यवो... |
| | ५.३० | |
| शौ ३.२४.१ | पयस्वतीर् ओषधय× पयस्वन् मामकं वचः । | * ओषदय× पयस्वान्... |
| | अथो पयस्वतां पय आ हरामि सहस्रशः ॥१॥ | ...हरामि सहरामि सहस्रसा |
| शौ २ | अहं वेद यथा पयश् चकार धान्यं बहु । | ...बहुः |
| | संभृत्वा नाम यो देवस् तं वयं यजामहे सर्वस्यायज्वनो गृहे ॥२॥ | * नाप * वेदस्त वं * सर्वस्यायज्वनो * |
| | यथा द्यौश् च पृथिवी च तस्थतुर् वरुणाय कम् । | ...तस्थतु * * |
| | एवं स्फातिं नि तनोषि मथनेषु खलेषु च ॥३॥ | * स्फाति * तनोसि मर्थरेषु... |
| शौ ४ | यथारूपथ् शतधारस् सहस्रधारो अक्षतः । | |
| | एवा मे अस्तु धान्यं सहस्रधारम् अक्षतम् ॥४॥ | |
| शौ ५ | शतहस्त समाहरस् सहस्रैव सं किरः । | ..गिरः |
| | यथेयं स्फातिर् आयसि कृतस्य कार्यस्य च ॥५॥ | यथेय...कृतस्य * * |
| शौ ३ | इमा या× पञ्च प्रदिशो मानवी× पञ्च कृष्टयः । | ...मानवैः * गृष्टयः |
| | सर्वाश् शंभूर् मयोभुवो वृष्टे शापं नदीर् इवेह स्फातिं समावहान् ॥६॥ | ...वृसे * *.इवे इह * °वहां |
| | इह स्फातिर् ओषधीनां देवानाम् उत संगमा । | ...°गम |
| | ¿इहैवाश्विनोर् अस्तो द्वापरस्योर् उत? ॥७॥ | |
| शौ ६ | तिस्रो मात्रा गन्धर्वाणां चतस्रो गृहपत्न्याः । | ...°पत्न्यः |
| | तासां या स्फातिवत्तमा तया त्वाभि मृशामसि ॥८॥ | * * °वर्तमा...सर्षामपि |
| | ज्येष्ठस्य त्वाङ्गिरस्य हस्ताभ्याम् आ रभामहे । | |
| कौ २०.५[३,४] | यथासद् बहुधान्यम् अयक्ष्मं बहुपूरुषम् ॥९॥ ॥का॰५॥ ॥अनु॰६॥ | ...°पौरुषम् |
| | ५.३१ | |
| कौ ६२.२१ | अत्य् आसरत् प्रथमा धोक्ष्यमाणा सर्वान् यज्ञान् बिभ्रती वैश्वदेवी । | अम्य् * * धोक्षमाणा... |
| | उप वत्सं सृजत वाश्यते गौर् व्य् असृष्ट सुमना हिंकृणोति ॥१॥ | * * सजद् * * विसष्टस् * °कृणोमि |
| कौ | बधान वत्सम् अभि धेहि भुञ्जती निज्य गोधुग् उप सीद दुग्धि । | बधान् धेहि मवि भेहि भुञ्जन्ती नधगोर् * * * |
| | इराम् अस्मा ओदनं पिन्वमाना कीलालं घृतं मदम् अन्नभागम् ॥२॥ | * * * °मानाः...मधुम् अन्वभागं |
| कौ | सा धावतु यमराज्ञस् सवत्सा सुकृतां पथा प्रथमेह दत्ता । | * * यंमराज्ञस्यवत्सा... |
| [१]कौ अतृणंदत्ता | अथो ऽवृष्टिदत्ता प्रथमेदम् आगन् वत्सेन गां सं सृज विश्वरूपाम् ॥३॥ | अतो * प्रथमेनसागं...विश्वारूपा |
| | प्रथमेदम् आगन् पूर्वस्माद् अत्रैताभ्य् अस्मिन् लोके मध्य उ त्वा ददाति । | * आगं पूर्वमाद् अत्र यताम्यस्मिन् लोके मध्य... |
| | सेमं धेनो प्रथमं पारयासि श्रद्धया दत्ता परमे व्योमन् ॥४॥ | * धेनो×... |
| | जानीहि स्मि-संस्तीर्य धेनवो गोपतिं यस् त्वा ददातु प्रथमस् स्वधाधान् । | * संसीय ...प्रथम स्वधावां |
| | पूर्वा हि तत्र सुकृत× परेह्य् अतैषैता? रजस× परस्तात् ॥५॥ | ...राजस× * |
| | अति धेनुर् अनड्वाहम् अन्यसद्? ययो× क्रमीम्? । | |
| | अति वत्सानां पितरम् ऋषभं प्रति सासरत् ॥६॥ | * * पितर...सासुरत् |
| | ज्योतिष्मती प्रथमा याहि सूरे स्योनास् ते धेनो पतयो भवन्तु । | ...सोनस् * धेनवो * * |
| | सप्त त्वा सूर्या अन्वातपन्तीर् इदं धाम सातिसर× पराचैः ॥७॥ | * * सर्यान्वा° इमं... |
| | धात्रे सूत्रय मह्यं दधानोभौ लोकौ भुञ्जती वि क्रमस्व । | |
| | इषम् ऊर्जं दक्षिणां संवसाना भगस्य धाराम् अवसे प्रतीमः ॥८॥ | ...प्रतीम |
| | सहस्राक्षा शतं ज्योतिषां इ अस्या यज्ञियस्य पप्रिर् अमृता स्वर्गा । | °स्राक्ष * ज्योतियं... |
| | सा न ऐतु दक्षिणा विश्वरूपाहिंसन्तीं प्रति गृह्णीम एनाम् ॥९॥ ॥का॰१॥ | * नैतु * °रूपा अहिंसन्ती... |
| | ५.३२ | |
| शौ ४.१६.६ । [१]शौ रुशन्तः सायण-[स्तु रुषन्तः | ये ते पाशा वरुण सप्तसप्ततीस्? त्रेधा तिष्ठन्ति रुषता रुषन्तः । | * * * वरुणा... |
| | छिनद्य? सर्वे अनृतं वदन्तं यस् सत्यवाद्य् अति तं सृजामि ॥१॥ | ...सत्यवाग्य् अदि तुं * |
| शौ ४ | इह स्पश× प्र चरन्तीमे अस्य सहस्राक्षा अति पश्यन्ति भूमिम् । | * * प * स्याम... |
| | सोऽस्य स्नतं प्र मुनाति? कश् चन न स मुच्यते वरुणस्य पाशात् ॥२॥ | * कश्चनस्स मुच्यते... |
| शौ ३ | उतेयम् अस्य पृथिवी समीची द्यौर् बृहत्य् [उर्व्] अन्तरिक्षम् । | उतयम्...बृहतीर् ... |
| | उतो समुद्रौ वरुणस्य कक्षाव् उतास्मिन्न् अल्प उदके निषक्तः? ॥३॥ | * समुद्रो * कक्षार्...नमक्तः |

| | | |
|---|---|---|
| | यस् तिष्ठति मनसा यश् च वञ्चति यो निलायं चरति य× प्रलायम् । | ...वाचति... |
| शौ २ | द्वौ यद् वदतस् संनिषद्य राजा तद् वेद वरुणस् तृतीयः ॥४॥ | * * अवदतस्...वेत * तृतीया |
| | सर्वं तद् राजा वरुणो वि चष्टे यद् अन्तरा रोदसी यत् परस्तात् । | सर्वं...य× * |
| शौ ५ | संख्याता अस्य निमिषो जनानाम् अक्षान् न श्वघ्नी भुवना मिमीते ॥५॥ | संशातश्च * * अक्षां * स्त्वघ्नी * ममीते |
| | त्वम् एव राजन् वरुण धर्ता देवानाम् असि विश्वरूपः । | ...धत्ता देवानम् * * |
| | दुश्चर्मास्? तद् अस× पिशङ्गो यस् सत्यां वाचम् अनृतेन हन्ति ॥६॥ | |
| | यस् समाम्यो वरुणो यो व्याम्यो यस् संदेश्यो वरुणो यो विदेश्यः । | * सामान्यो...यश्च्यंदेच्यो * * विदेच्यः |
| शौ ८ | यो दैव्यो वरुणो यश् च मानुषस् सर्वांस् त्वयि तान् प्रति मुञ्चाम्य् अत्र ॥७॥ | ...त्वेतानि * * * |
| | शतेन पाशैर् वरुणाभि धेहि मा ते मोच्य् अनृतवाङ् नृचक्षः । | ...मोचनृतवा * |
| शौ ७ | आस्तां जाल्म उदरं श्रंसयित्वा कोश इवाबन्ध्र× परिकृत्यमानः ॥८॥ | आस्थां * उदनं शंसीत्वा कोशिवावभ्रि× °माना |
| [1]सायणः संसयित्वा | ¿उतो चित् प्रपातय चितो? तद् अपि नह्यसि । | |
| | उतो तद् अस्य गं? कृत्वा राजा वरुण ईयते ॥९॥ | ...वरुणीयते |
| | येनं छिनत्ति वरुणो नडं कशिपुने यथा । | * छिनद्म्य * नतं कसिपुने * |
| | मूलं तस्य वृश्चति य एनं प्रमिमीषति ॥१०॥ ॥का°२॥ | मूले * वृश्चती... |

५.३३

| | | |
|---|---|---|
| शौ ६.१३३.१ | य इमां देवो मेखलाम् आबबन्ध यस् संननाह य उ मा युयोज । | ...सुन्नाह यमाह योजः |
| | यस्य देवस्य प्रशिषा चरामि स पारम् ऋच्छात् स उ मा वि मुञ्चात् ॥१॥ | * * प्रदिषा * * फारमृश्छात् सौ * * मुञ्चा |
| शौ २ | आ[हुतास्य् अभि]हुत ऋषीणाम् अस्य् आयुधम् । | |
| | पूर्वा व्रतस्य प्राश्नती वीरघ्नी भव मेखले ॥२॥ | * वृधस्य प्राष्णाती अवीरघ्नी... |
| शौ ३ | मृत्योर् अहं ब्रह्मचारी यद् अस्मि भूतान् निर्याचन् पुरुषं यमाय । | * * ब्रह्मचार्याद् * भूतां निर्याजं... |
| | तम् अहं ब्रह्मणा तपसा श्रमेणानयैनं मेखलया सिनामि ॥३॥ | * आर्यं * तमसा श्रमेणानैनं... |
| शौ ६.१३४.१ | अयं वज्रस् तर्पयतां व्रतेनावास्य राष्ट्रम् अव हन्तु जीवम् । | * * तत्पयतां व्रतेन । आवास्य... |
| | शृणातु स्कन्धान् प्र शृणातूष्णिहा [वृत्रस्येव शचीपतिः] ॥४॥ | किनन्तु स्कन्धा पृशणा तूष्णिह |
| शौ २ । [1]शौ अधरो ऽधर उत्तरेभ्यः | अधरो ऽश्रम् अधरो ऽश्रेण गूढ× पृथिव्या मोत् सृपत् । | ...गूढत् * मो * |
| | वज्रेणावहतश् शयाम् ॥५॥ | °वहत श्रयां |
| शौ ३ | यो जिनाति तम् अन्व् इच्छ यो जिनाति तम् इज् जहि । | * जनाति * * * * जनाति... |
| | जिनतो वज्र सायक सीमन्तम् अन्वञ्चम् अनु पातय ॥६॥ | * * सायकः सीमंचमन्वचम् * * |
| शौ ६.१३५.१ | यद् अश्नामि बलं कुर्वे वज्रम् अनु पातयति? । | * उष्णामि... |
| | स्कन्धान् अमुष्य शातयन् वृत्रस्येव शचीपतिः ॥७॥ | * * शातयं... |
| शौ २ | यत् पिबामि सं पिबामि समुद्र इव संपिबः । | * पिवामि * पिवामि समुद्रैव संपिव |
| | प्राणान् अमुष्य संपिबन् सं पिबाम्य् अहं पिबम् ॥८॥ | * * संपिवां * पिवाम्य् * पिवं |
| शौ ३ | यद् गिरामि सं गिरामि समुद्र इव संगिरः । | ...°र |
| | प्राणान् अमुष्य संगिरन् सं गिराम्य् अहं गिरम् ॥९॥ | * * °गिरं... |
| शौ ६.१३३.४ | श्रद्धाया दुहिता तपसो ऽधि जाता स्वसर्षीणां भूतकृतां बभूव । | |
| | सा नो मेखले मतिम् आ धेहि मेधा[म् अ]थो नो धेहि तप इन्द्रियं च ॥१०॥ | * * * पतिम्... |
| शौ ५ | यां त्वा पूर्वे भूतकृत ऋषय× परिबेधिरे । | ...मेधिरे |
| | सा त्वं परि ष्वजस्व मां दीर्घायुत्वाय मेखले ॥११॥ ॥का°३॥ | * * °धजस्व मा... |

५.३४

| | |
|---|---|
| ¿इयं ते श्वश्रूर् वदतु श्वशुरस् ते अशंतरम् । | अयं... |
| ¿देवात् ते अभिशोचनं ब्रह्मविद्वेषणं कृतम् ॥१॥ | |
| ¿आ क्रन्दय उलुलाकर् वच आ धेह्य् अप्रियं शिरः । | * * °कुर् वाच...शिरो |
| ¿लिप्सम्य् अहस्ताभ्यां केशान् ते अभिशोचनम् ॥२॥ | |
| ¿ये केशयो× प्रतिदिता× कुरीरम् ओपशम् । | * केशायो× प्रतिधीत * यूपशः |
| ¿अथो ये ते स्वास् सन्ति सर्वे ते अभिशोचनम् ॥३॥ | * * * स्वा... |
| ¿अप त्रिसमृधाना दर्माद्? इदं कृणोमि ते । | |
| अथो यत् ते संवासस् सर्वं तत् ते अभिशोचनम् ॥४॥ | |
| अर्कम् अक्षि× प्रपतातो मुनिचक्षु× कृणोमि ते । | |
| अथो श्वश्र्वो ऽरायम्य× प्रति स्म गगणं? कुरु ॥५॥ | |
| उत् तिष्ठारे पलायस्व मरीचीनां पदं भव । | * तिष्ठरे * सरीचीनां * * |

अथो उद् अकार्यं कुर्वं आसां सम् अर्षि मुष्कयोः ॥६॥
उपक्षेदामि? चालय वातस् तूलम् इवीजय? ।
अद्भिस् सिन्धोश् च वाह्वोर् दध्यसूरवस्तुवे? ॥७॥

दद्भिस्सिन्धुस्य * *

अभि गाय शावलीयं श्रोणीयं साधुवाहनम् ।

* * शावलेयं श्रोणेयं *

कालंस्याकीश्वरकृध्यू? आयत× प्रति चालय ॥८॥
[... ...] ह्रस्वपुच्छं वातरोहं मनोजवम् ।

ह्रस्वपुश्छं...

तं ते रथं सं भरन्ति देवास् तेना चरामि पतिम् इच्छमाना ॥९॥ ॥का॰४॥

## ५.३५

शौ ४.३९.१ तै ७.५.२३.१

अग्नये सम् अनमन् तस्मै पृथिव्या सम् अनमन्

अग्नय * अनमं * पृथिव्यास् * अनमं

यथाग्नये पृथिव्या समनमन्न् एवा मह्यं संनमस् सं नमन्तु ।

* पृथिव्यास्...

विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
संनतेस् तु संनेनेमतस्? स्वाहा ॥१॥

शौ ३ तै

वायवे सम् अनमन् तस्मा अन्तरिक्षेण सम् अनमन्

* * अनमं तस्मान्तरिक्षेण * अनमं

यथा वायवे ऽन्तरिक्षेण समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।

* * * ॰नमं

[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥२॥

शौ ५ तै

सूर्याय सम् अनमन् तस्मै दिवा सम् अनमन्

* * अनमं * दिवम् * अनमं

यथा सूर्याय दिवा समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।

* * * ॰नमं (एवमग्रे ऽपि सर्वत्र अनमन् इत्यस्य स्थाने अनमं इत्येव)

[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥३॥

शौ ७ तै

चन्द्राय सम् अनमन् तस्मै नक्षत्रैस् सम् अनमन्
यथा चन्द्राय नक्षत्रैस् समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥४॥
सोमाय सम् अनमन् तस्मा ओषधीभिस् सम् अनमन् ।
यथा सोमायौषधीभिस् समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्,
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥५॥
यज्ञाय सम् अनमन् तस्मै दक्षिणाभिस् सम् अनमन्
यथा यज्ञाय दक्षिणाभिस् समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥६॥
समुद्राय सम् अनमन् तस्मै नदीभिस् सम् अनमन्
यथा समुद्राय नदीभिस् समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥७॥
इन्द्राय सम् अनमन् तस्मै वीर्येण सम् अनमन्
यथेन्द्राय वीर्येण समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥८॥
ब्रह्मणे सम् अनमन् तस्मै ब्रह्मचारिभिस् सम् अनमन्
यथा ब्रह्मणे ब्रह्मचारिभिस् समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥९॥
देवेभ्यस् सम् अनमन् तेभ्यो अमृतेन सम् अनमन्
यथा देवेभ्यो अमृतेन समनमन्न् [एवा मह्यं संनमस् सं नमन्तु ।
[विर्त्ति भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
[संनतेस् तु संनेनेमतस्? स्वाहा] ॥१०॥

तै २

प्रजापतये सम् अनमन् तस्मै प्रजापतिभिस् सम् अनमन्

यथा प्रजापतये प्रजापतिभिस् समनमन्न् एवा मह्यं संनमस् सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशुं ब्रह्म ब्राह्मणवर्चसम्
संनतेस् तु सं ने ने म त स्? स्वाहा ॥११॥
सप्त संनमो [अ]ष्टमी धीति[स्] साधनी ।

वा २६.१

सकामान् अध्वन× कृणु संज्ञानम् अस्तु नो घने ॥१२॥ ॥का°५॥ ॥अनु°७॥

५.३६

ये वारुणा उत नैरृत्यस्? पथीनां वीरुधां च पाशाः ।
ये भौमा भूम्या अधि संबभूवुस् ते त्वा न हिंसन् शिवतातिर् अस्तु [ते] ॥१॥
ये अन्तरिक्षे दिवि ये च पाशान् ये विघृ[.........] ।
[......ते त्वा न हिंसन् शिव]तातिर् अस्तु ते ॥२॥
ये ते मानुषं मनुष्याश् श्रयन्ते यां वा होत्रां पित्र्याम् आरभन्ते ।
समाम्यो वरुणो य आजगाम स त्वा न हिंसाच् छिवतातिर् अस्तु ते ॥३॥

अथसाद ८

अपप्रगा यदि वा समामिषे [अ]ग्निम् आरेभिषे यदि वा समिद्धम् ।
विद्वान् अविद्वान् अनृतं यद् उवकथ त्वा ता त्वा न हिंसान् शिवतातिर् अस्तु ते ॥४॥
यत् प्रतीच्यां द्विषत× ?पृष्ठांस पेथ्यं चामपात्रे ऽपपपात? ।
हीनस् सत्येनानृतं यद् उवकथ [ता] त्वा न हिंसान् शिवतातिर् अस्तु ते ॥५॥
यं ग्रावाणम् आरभन्ते येनांशून् अभिषुन्वन्ति सोमम् ।
यद् वा धनं धनकामो निरेमिषे क्षत्रं गाम् अश्वं पुरुषं वोभयादत् ।
[तं] त्वा न हिंसान् शिवतातिर् अस्तु ते ॥६॥
यो बाणवन्तं सुधियं जघान तस्याश्मा शानाद् अधि लोष्टाश्वृतस्य ।
[स] त्वा न हिंसाच् छिवतातिर् अस्तु [ते] ॥७॥
अपप्रगा यदि वा व्यामिषे [अ]ग्निम् आरेभिषे यदि वा समिद्धम् ।
[विद्वान् अविद्वान् अनृतं यद् उवकथ त्वा ता त्वा न हिंसान् शिवतातिर् अस्तु ते] ॥८॥
?जाम्या हस्तं घृतम् आ रेभिषे धनुर् वोद्धतम् इत्था चङ्क्रमित्वा ।
मन्युर् वा राज्ञो वरुणस्या ममन्थ स त्वा न हिंसाच् छिवतातिर् अस्तु ते ॥९॥ ॥का°१॥

५.३७

पै ३.३९.१९

?या ते प्रजा पीहता पराभूद् योनिर् वा मुग्धा निहता पिशाचै? ।
अस्राणां वाध्य् उपतिष्ठासि घोरं सर्वं तत् ते ब्रह्मणा पूरयामि ॥१॥
यद्य् अस्या× प्रजा वरुणेन शुष्पिता? दुर्णामानो वा ऋत्वियम् अस्याईन्ति? ।
?द्वेषात् सहपत्न्याद् विधि चक्रम् अस्या यत्वान् राष्ट्रा अप हन्त्व् अग्निः? ॥२॥
अस्यास् स्त्रिया यदि लक्ष्मीर् अपुत्र्या गर्भो वास्या यातुधानै× पराभृतः ।
दुष्वप्न्यं वा यत् स्वपती ददर्शेन्द्राग्नी तद् कृणुतां भद्रया पुनः ॥३॥
देवैनसाद् यदि पुत्रं न विन्दसे मनुष्याणां वा त्वा शपथो रराध ।
पितृभिर् वा ते अधि सूत× प्रतिष्ठित इदं तन् निष् टन्वो जनयासि पुत्रम् ॥४॥

शौ ६.१७.२

वैश्वानरो जन्मना जातवेदा× प्रजापतिस् सिञ्च[तु] रेतो ऽस्याम् ।
बाधेथा द्वेषो निर्ऋतिं पराचै× पुत्रिणीम् इमां प्रसवं कृणोतु ॥५॥
इह प्रजाम् अग्निर् अस्यै ददात्व् आदित्येभिर् वसुभिस् संविदानः ।
विश्वे देवा हवम् आ यन्तु मे सं पुत्रो [अ]स्यां जायतां वीर्यवान् ॥६॥
येन देव्य् अदितिर् गर्भम् आधत्ते येन प्रजास् सृजतु प्रजापतिः ।
तेनाहम् अस्यै हविषा जुहोमि यथा पुमांसं जनयासि पुत्रम् ॥७॥
वन्वे ते पुत्रं परि देवताभ्यो अनु मन्यन्तां मरुत× पृश्निमातरः ।
गर्भस् त्वा दशमास्य× प्र विशत् कुमारं जातं पितृताद् उपस्थे ॥८॥ ॥का°२॥

५.३८

ऋ १०.१३६.१

केश्य् अग्निं केशी विषं केशी बिभर्ति रोदसी ।

Variant readings (right column):

- * * * समनमं नेया ...
- * * अध्वनि× ...
- ...पतीनां * * पाशात्
- * भूमा ... क्षमां शिव° ...
- ...श्रयंत * * होत्रान् प्रित्याम् *
- * * याजगाम ... हिंसा शिव° * *
- अप्रप्रागा ह्यरि ...
- * अवविद्वान् ... इवक्त * स * * सिंसां *
- ...पेद्यां जामपात्रे पपापाथ
- हिनस्सत्येनानृतं * इवक्त * * * हिंसां ...
- ... °रभन्त °सून् °पन्वन्ति *
- ...वोभयादत्र
- * * * हिंसां ...
- ये * * * तस्यश्म ...
- * * * हिंसं शिव° ...
- * हृदि ...
- ...इत चक्रमित्वा
- * वो * * मिमत्थ * * * हिंसां शिव°
- अस्रानं वाधिप तिष्ठामि ...
- ...दुष्नामानो ...
- आग्निः
- यस्या ... °भृतार्
- दुष्वप्न्यं * * * तिदर्शे इन्द्राग्नी ...
- ... शपथे *
- ... टण्वो * *
- ...प्रसवं *
- * * * असौ ददाम्य् ...
- * * * * * मे ...
- * * * * आदते ...
- ... पृष्णि°
- ...उपस्ते

| | | |
|---|---|---|
| | केशी विश्वं स्वर् दृशे केशीदं ज्योतिर् उच्यते ॥१॥ | * * स्वर् दृशे... |
| ऋ २ | मुनयो वातरशना× पिशङ्गा वसते मला । | * वातरेशना× ... मलाः |
| ४ऋ अविक्षत | वातस्यानु ध्राजिं यन्तु यद् देवासो अयुक्षत ॥२॥ | |
| ऋ ३ | उन्मदिता मौनेयेन वातीँ आ तस्थिमा वयम् । | * मोनेयेन वार्चां आ शस्तिमा * |
| | शरीरेद् अस्माकं यूयं मर्तासो अभि पश्यथ ॥३॥ | ... मन्तासो वि पश्यत |
| ऋ ४ | अन्तरिक्षेण पतति स्वर् भूतावचाकशत् । | * पततिस्स्वन् भूताविचा॰ |
| | मुनिर् देवस्यदेवस्य सौकृत्याय सखा यतः ॥४॥ | * ॰देवस्या * * यत । ओं असौकृत्याय सखायत |
| ऋ ५ | इन्द्रस्याश्वो वायोस् सखाथो देवेषितो मुनिः । | ... सखातो दिविषितो * |
| | उभौ समुद्राव् आ क्षेति सद्य× पूर्वम् उतापरम् ॥५॥ | * * * क्षीति ... |
| ऋ ६ | गन्धर्वाणाम् अप्सरसां देवानां चरणे चरन् । | ... चरं |
| | मुनि× केतस्य संविद्वान् सखा स्वादुर् मदिन्तमः ॥६॥ | * केतुस्स्य ... |
| ऋ ७ | वायुर् अस्मा उपामन्थत् पिनष्टि स्मा कुनंनमा । | ... कुनंनमः |
| | मुनिर् विषस्य पात्रेण यद् रुद्रेणादिबत् सह ॥७॥ | * विशस * * रुद्रेणात्पिबत् * |
| | संयुक्ते द्यावापृथिवी तिष्ठन्ते विमृत्ये? । | |
| | केशेनैकस्य देवस्य विष्टम्भाच् छचीपदिः ॥८॥ ॥का॰३॥ | |

ऋ१०.१२६.१,२,३,७,५,६,४,८

## ५.३९

| | | |
|---|---|---|
| | न तम् अंहो न दुरितं देवासो अष्ट मर्त्यम् । | |
| | सजोषसो यम् अर्यमा मित्रो नयन्ति वरुणो अति द्विषः ॥१॥ | |
| | तद् धि वयं वृणीमहे वरुण मित्रार्यमन् । | ... वरुणो मित्रा अर्यमन् |
| | येन निर् अंहसो यूयं पाथ नेथाथ मर्त्यम् अति द्विषः ॥२॥ | यन् नो निंहसो ... मर्यम् * * |
| | ते नूनं नो ऽयम् ऊतये वरुणो [मित्रो अर्यमा] । | तन्नो तनू यूयस् * वरुण |
| | नयिष्ठा नो नेषणि स्थ पर्षिष्ठा× पर्षण्य् अति द्विषः ॥३॥ | * * नैषनि ष्ठ× * पर्षिणो * * |
| | शुनम् अस्मभ्यम् ऊतये वरुणो मित्रो अर्यमा । | ... वरुण मित्रार्यमन् |
| | शर्म यच्छन्तु सप्रथ आदित्यासो यद् ईमहे अति द्विषः ॥४॥ | * यच्छतु सुप्रथ * अत्... |
| | आदित्यासो [अ]ति स्रुधो वरुणो मित्रो अर्यमा । | |
| | रुद्रं मरुद्भिर् उग्रं हुवेमेन्द्रम् आदित्य स्वस्तये ऽति द्विषः ॥५॥ | ... अदितिं * * * |
| | नेतार ऊ षु णस् तिरो वरुणो मित्रो अर्यमा । | नेतार ... |
| | अति विश्वानि दुरिता राजानश् चर्षणीनाम् अति द्विषः ॥६॥ | * विश्वानति * * चर्षणीनाय् * * |
| | यूयं विश्वं परि पाथ वरुण मित्रार्यमन् । | |
| | युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयो ऽति द्विषः ॥७॥ | * शर्मांणि प्रया ... |
| | यथा ह त्यद् वसवो गौर्यं चित् पदि षिताम् अमुञ्चता यजत्राः । | * * त्पदि * * चित् प्रेषता वि मुन्चता * |
| | एवो ष्व् अस्मन् मुञ्चता व्य् अंह× प्र तार्य् अग्ने प्रतरं न आयुः ॥८॥ ॥का॰४॥ | * इव् ... प्रतिरन्त * |

## ५.४०

| | | |
|---|---|---|
| का १.४ इत्यादि | देवस्य त्वा सवितु× प्रसवे अश्विनोर् बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतो ब्राह्मणेभ्यो निर् वपामि । | * * * प्रसवैश्विनोः ... ब्रह्मणेभ्यो ... |
| पै ६.२२.९१ | स मे मा क्षेष्ट मदम् इष्यमाणः ॥१॥ | स मे मां क्षिष्ट ... |
| | पितॄणां लोके अनु मदं पृथिव्येमं पचाम्य् अनु द्यौर् मन्यताम् अन्व् अन्तरिक्षम् । | * * * मर्षो ... मन्वताम् * |
| | अनु मन्यताम् अदितिर् देवपुत्रा पिबेत् स्वर्गे लोके ऽस्तु ॥२॥ | |
| | ब्रह्मणोषाम् अधि दधाम्य् अग्नौ भूम्यां त्वा भूमिम् अधि धारयामि । | |
| | अग्नि× पचं रक्षत्व् ओदनम् इमं रक्ष× पिशाचान् नुदतां जातवेदाः ॥३॥ | ... पिशाचां * * |
| | अच्युतम् अक्षितिं विश्वदानिम् उत्सम् इव मदम् अक्षीयमाणम् । | * * ॰दानीम् ... |
| | पिता पितामह उत यस् तृतीय× प्रयतं भागम् उप जीवन्त्व् अत्र ॥४॥ | |
| | प्रपीनम् अक्षितिं विश्वदानिं सोमम् इव पुनर् आप्यायमानम् । | * अक्षतिं ॰दान्यो ... अप्यायमानं |
| | पुत्र× पौत्र उत य× प्रपौत्रस् तेषाम् अस्तु निहितो भाग एषः ॥५॥ | ... निहतो * * |
| | मामेजार्ये? निहितो भाग एष मानुषं मार्षत? क्लृप्तो ऽस्तु । | * निहतो ... क्लृप्तो * |
| | वैवस्वते निदधे शेवधिम् एतं तोसत्? सुजातु मह्यम् एव पुनः ॥६॥ | |
| | पूर्यतां यो ददन् तस्यौदनो ऽयं तिष्ठत्य् आक्षितिस् सदा । | * य ... अक्षतिस् * |

शौ १८.४.३६

वैवस्वतेन क्लृप्तो ऽस्तु राज्ञा समेता उप जीवन्तु मे स्वाः ॥७॥
शतधारं सहस्रधारम् उत्सम् अक्षितं व्यच्यमानं सलिलस्य मध्ये ।
ऊर्जं दुहानम् अनपस्फुरन्तम् उपासीयास् सुकृतां यत्र लोकाः ॥८॥
॥का॰५॥ ॥अनु॰८॥

इत्यथर्ववेदे पैप्पलादशाखायां पञ्चमः काण्डस् [समाप्तः] ॥

* ग्लुप्तो * * समीतोप * * स्वा
* * * अक्षतं यश्चमानं ...
* * उपासीय ... ॥ ओं उपासीय सुकृतां यत्र लोकाः(द्विरुक्तिः काण्डसमाप्तिसूचिका)
इत्यथर्वणि ...

## ६.१

ऋ १०.१२०.१–९, शौ २०.[१०७.४–१२

तद् इद् आस भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस् त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रून् अनु यं विश्वे मदन्त्य् ऊमाः ॥१॥
वावृधानश् शवसा भूर्योजाश् शत्रुर् दासाय भियसं दधाति ।
अव्यनच् च व्यनच् च सस्नि सं ते नवन्तः पिपृता मदेषु ॥२॥
त्वे क्रतुम् अपि वृञ्जन्ति विश्वे द्विर् यद् एते त्रिर् भवन्त्य् ऊमाः ।
स्वादोस् स्वादीयस् स्वादुना सृजा सम् अदस् सु मधु मधुनाभि योधीः ॥३॥
इति चिद् धि त्वा धना जयन्तं रणंरणम् अनुमदन्ति विप्राः ।
ओजीयो धृष्णो स्थिरम् आ तनुष्व मा त्वा दभन् दुरेवा यातुधानाः ॥४॥
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिस् सं ते शिशामि ब्रह्मणा वयांसि ॥५॥
स्तुषेय्यं पुरुवर्पसम् ऋभ्वम् इनतमम् आप्त्यम् आप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ॥६॥
नि तद् दधिषे ऽवरं परं च यस्मिन्न् आविथावसा दुरोणे ।
आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ॥७॥
इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषम् अग्रयस् स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजो दुरश् च विश्वा अवृणोद् अप स्वाः ॥८॥
एवा महान् बृहद्दिवो ऽथर्वावोचत् स्वां तन्वम् इन्द्रम् एव ।
स्वसारो मातरिभ्वरीर् अरिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ॥९॥ ॥का॰१॥

{ अथ षष्ठः काण्डा लिख्यते ॥ ओं नममो ज्वालाभगवत्यै ॥ ओं नमो तिलोतमायैः ॥ ओं उद् * * भवनेषु ... त्वेच॰(उपरि प)
* * अन् ऋणीत ...
* * * शत्रून् ...
* * अव्यनच् * सस्नि ...
... ऊमा
* स्वादीय * * * अधम् ... योधी
* * वि ...
* * श्चिरम् ... दभं दुरयवा *
* * शास॰ ...
* थायुधा ...
स्तु॰ * ऋत्वम् ...
* शर्शते ...
न्य दिद् यदिषे ... आवथा॰ *
* मातर * जिघन्त्व ...
* * * * दुराश् ...
* मां * थर्वानोचत् * तनुम् ...
... यवसा * *

## ६.२

¿वृषर्मन्त्र योनि नो विभावा? अमृतासुस् स्वजन्मा वर्धमानः । (शौ ५.१.१)
अदब्धासुर् ¿भ्राजसा इहव? त्रितो दाधार त्रीणि ॥१॥ (शौ २)
वि नि यो धर्माणि प्रथमस् ससाद ततो वपूंषि कृणुते पुरूणि ।
यश् च योनिं प्रथम आविवेशा यो वाचम् अनुचितां जिगाय ॥२॥ (शौ ३)
यस् ते शोकस् तन्वा रिरेच क्षरद् धिरण्यं शुचयो अनु स्वाः ।
अत्रा दधृषे [अ]मृतानि नामास्मे वस्त्राणि ¿विश एरयन्ताम्? ॥३॥ (शौ ४)
प्र यद् एते प्रतरं पूर्व्यं गुस् सदस्सद आतिष्ठन्तो अजुर्यम् ।
कविश् शुषस्य मातरा रिहाणे जाम्यै धुर्यं पतिम् ¿एरयेथाम्? ॥४॥ (शौ ५)
तद् ऊ षु ते महत् पृथुज्मन्? नमः कविः काव्येना कृणो[मि] ।
¿यत् सम्यञ्चो ऽभ्यञ्चो यक्षा दामैवोद चक्रा ववर्धा? ॥५॥ (शौ ६[१,२])
सप्त मर्यादाः कवयस् ततक्षुस् तासाम् अनेकाम् अभ्य् अंहुरो गात् । (शौ ७)
¿उतामृतासु व्रते कृण्वं असुराः पूतस् स्वधया समद्गु? ॥६॥
उतायु[र्] ज्येष्ठो रत्ना दधात्य् ऊर्जा ¿वायुं च ते कविर् दात्? । (शौ ८[१,२])
पुत्रो वा यत् पितरं क्षत्रम् ईडे ज्येष्ठं मर्यादम् अह्वयन् स्वस्ति ॥७॥ (शौ ८[३,४])
दर्शन् नु ¿तां वरुणे च इद्याव् आवरव्रजत? कृणवो वपूंषि ।

... अमृतासु * *
अदुब्धासु * * त्रतो ...
* * * धर्मणि प्रथम स्वसा अतइ वपुंसि * पुरोणि
* * * प्रथमाविवेश ...
* * * * * क्षुविरण्यो * न स्वा
* * * नामास्मि वस्त्राणी येरयन्त
प्रेद् एते * * * स्वधस्वधातिष्ठन्तो दुर्यं
करि * * * जामीवध्वर्युः प्रतिमानमीता
* * * त महा प्रभूर्यसं ...
* * * पितरा क्षन्तुम् ईन्ते ... अहयं *
दर्श ...

| | | |
|---|---|---|
| शौ ९[१.२] | अर्धम् अर्धेन शवसा पृणक्ष्य् अर्धेन शुष्म वर्धयसे अमूर ॥८॥ | * * * पृणद्य् * शुष्मं * मुर |
| शौ ९[३-६] | अवीवृधाम शग्म्यं सखायं वरुणं पुत्रम् अदितेर् इषिरम् । | * शग्म्यो साधायं... |
| | कविशस्तान्य् अस्मै वपूंष्य् अवोचाम रोदसी सत्यवाचौ ॥९॥ ॥का॰२॥ | कविशस्तान्य् अस्मै वचां वोचाम * * |
| | **६.३** | |
| | को व× पश्चात् प्राविच्छायत् क× पुर× पुराखनत् पथा यद् पजातु | |
| | परिमाणा वरुणप्रसूता अप× प्रजापतिर् असृजत स पुर× | |
| | पुरा स नो अवासृजत् तेन सृष्टा× क्षरामसि ॥१॥ | * सो * अंनवासृजत् * सृष्ट * |
| | पुनानासो बहुधा क्षियन्तीमांश् च लोकान् प्रदिशश् च सर्वाः । | °सौ...लोकां * * सर्वां |
| | पुरं तस्माद् दुरिताद् अविद्या मुञ्चन्तु मृत्योर् निर्ऋतेर् उपस्थात् ॥२॥ | * तस्मा...उदस्थाः |
| शौ ६.५१.२ | आपो अस्मान् मातरस् सूदयन्तु घृतेन नो घृतपुव× पुनन्तु । | |
| | विश्वं हि रिप्रं प्रवहन्तु देवीर् उद् इद् आभ्यश् शुचिर् आ पूत एमि ॥३॥ | ...येमि |
| | आपो देवीर् मातरस् सूदयिष्णवो घृतश्चुतो मधुना सं पपृच्रे । | ...पपृच्छे |
| ऋ ६.५२.१५[३.४] | ता अस्मभ्यं सूदयो विश्वम् आयु× क्षप उस्रा वरिवस्यन्तु शुभ्राः ॥४॥ | ...आयु... |
| | उदकस्योदकत्वम् आ रेवत्त्वम् आ रेवतीनाम् । | उदकं° * रेवत्वम्... |
| | शुन्धोत्वाम्? आपश् शुन्धन्त्व् अस्मान् ॥५॥ | |
| | यूयम् आपो वीरश्रियो यूयं सूदयथा शुचिम् । | * * °श्रियोर् * सुद° * |
| | य× कुमाकमिद्? दिशो महियन्ते? प्रदिश× पृथक् ॥६॥ | |
| | यूयं मित्रस्य वरुणस्य योनिर् यूयं सोमस्य धेनवाम्? अधिष्ठाः । | ...ययं सोमस्ये * * |
| | यक्ष्मान् देवीर् देवा क्षीयतीर्येरुरी? यूयं जिन्वत ब्रह्म क्षत्रम् आपः ॥७॥ | यक्ष्मां...क्षत्रायः |
| | ¿शश्वदाभिश् शाशदाना शमनां नयामसि? । | |
| | आपो विश्वस्य सूदनीर् या देवा मनवे दधुः? ॥८॥ | |
| | ¿यद् धावन् विपुनतेदद् आपो यस् तिष्ठति शुद्धा यद् उद् भवन्ति । | ...यत् तद् * |
| | ¿नासाम् अवद्यम् अवदंत्य रिप्रम् सनाद् एव मधुना सं पपृच्रे? ॥९॥ | ...पपृच्छे |
| | हिरण्यवर्णाश् शुचय× पावका× प्र चक्रमुर् हित्वावद्यम् आपः । | * * पावक * चन्क्रमर् * आपा |
| | शतं च व× प्रस्रवणेषु देवीस् सहस्रं च पवितारः पुनन्ति ॥१०॥ | ...पुनन्ती |
| | तास् त्वा भृशी? ब्रह्माणं सूदयन्त्य् ¿अक्षोष्ठिया स्तोत्रिया जीवधन्या? । | |
| | या विश्वस्य ¿सुचक्रियो वयाथोर्गावैवपयसास् ता अजाय? ॥११॥ | ...अ(उपरि द्र)जाय |
| | विश्वाद् रिप्रान् मुञ्चन्तु सिन्धवो नो यत्न्य् एनांसि चकृमा तनूभिः । | ...एनासि * * |
| | इन्द्रप्रसृष्टा वरुणस्य प्रसूताः सिञ्चतापो मध्वा समुद्रे ॥१२॥ ॥का॰३॥ | * * प्रसता... |
| | **६.४** | |
| शौ ५.५.१ | रात्री माता नभ× पितार्यमा ते पितामहः । | |
| [२]शौ सिलाची | शिलादी? नाम वा असि सा देवानाम् असि स्वसा ॥१॥ | * * वासि... |
| शौ २ | यस् त्वा पिबति जीवति त्रायसे पुरुषं त्वम् । | ...पिवति... |
| | धर्त्री च शश्वताम् असि ¿शश्वतां त्यन्वंचनीं? ॥२॥ | धरत्री... |
| शौ ४ | य[द्] दण्डेन यद् इष्वा यद् अरुर् हरसा कृतम् । | ...उद्या * अरुर् * * |
| [४]शौ ६[४] | तस्य त्वम् असि भेषजी निष्कृतिर् नाम वा असि ॥३॥ | * * * भीषजीं नि×कृतिर् * वासी |
| शौ ५ | भद्रा प्लक्षेण तिष्ठस्य् अश्वत्थे खदिरे धवे । | * प्रक्षेण... |
| | भद्रा न्यग्रोधे पर्णे सा न एह्य् अरुन्धति ॥४॥ | ...नेह्यरुन्धती |
| शौ ३ | वृक्षंवृक्षम् आ रोहसि वृषण्यन्तीव कन्यला । | |
| | जयन्ती प्रत्यातिष्ठन्ती संजया नाम वा असि ॥५॥ | ...वासी |
| | हिरण्यवर्णे युवते शुष्मे लोमशवक्षणे । | ...लोमसमक्षणे |
| शौ ७ | अपाम् असि स्वसा लाक्षे वातो ¿हात्मा बभूव ते? ॥६॥ | * * * * * यत्सा बभूव्यथे |
| | हिरण्यबाहु सुभगे सूर्यवर्णे वपुष्टमे । | °हू... |
| शौ ६ | रुतं गच्छासि निष्कृते सेमं निष् कृधि पूरुषम् ॥७॥ | रूतं गच्छमि निष्कृधि * * * पौ° |
| [४]शौ ४[४] | घृताची? नाम कानीनो अजबभ्रु पिता तव । | * * * तवभ्रू * भव |
| शौ ८ | अश्वो यमस्य यश् श्यावस् तस्य हास्नास्य् उक्षिता ॥८॥ | * यमस्ये आवस् तास्य हास्नास् उक्षत |
| | अश्वस्यास्नस् संपतिता सा पर्णम् अभि सिष्यदे? । | °स्नस्...शुष्यत |
| शौ ९ | सरा पतत्रिण्य् असि सा न एह्य् अरुन्धति ॥९॥ | सदा पततिन्नसि मा नेह्यरुन्धती |

घृताचके वामरते विद्युत्पर्णे अरुन्धति । ...°ती
‡यातु रङ्क्मिष्ठासि त्वम् अङ्ग निष्करीयसि ॥१०॥
‡यत् ते जग्धं पिशाचैस् तत् ताह्यप्यायतां पुनः ।
‡लाक्षाय त्वा विश्वभेषजीद्? देवेभिस् त्रायतां सह ॥११॥ ॥का° ४॥

६.५

शौ २.१५.१ — यथा द्यौश् च पृथिवी च न बिभीतो न रिष्यतः ।
एवा मे प्राण मा बिभेर् एवा मे प्राण मा रिषः ॥१॥ — ...पान * रिषथा
यथा वायुश् चान्तरिक्षं च [न बिभीतो न रिष्यतः । एवा...] ॥२॥
शौ ३ — यथा सूर्यश् [च] चन्द्रमाश् च [न बिभीतो न रिष्यतः । एवा...] ॥३॥
शौ २ — यथाहश् च रात्री च [न बिभीतो न रिष्यतः । एवा...] ॥४॥
यथा धेनुश् चानड्वांश् च [न बिभीतो न रिष्यतः । एवा...] ॥५॥
यथा मित्रश् च वरुणश् च [न बिभीतो न रिष्यतः । एवा...] ॥६॥
शौ ४ — यथा ब्रह्म च क्षत्रं च [न बिभीतो न रिष्यतः । एवा...] ॥७॥
यथेन्द्रश् चेन्द्रियं च [न बिभीतो न रिष्यतः । एवा...] ॥८॥
यथा वीरश् च वीर्यं च [न बिभीतो न रिष्यतः । एवा...] ॥९॥
यथा प्राणश् चापानश् च [न बिभीतो न रिष्यतः । एवा...] ॥१०॥
यथा मृत्युश् चामृतं च [न बिभीतो न रिष्यतः । एवा...] ॥११॥
शौ ५ — यथा सत्यं चानृतं च [न बिभीतो न रिष्यतः । एवा...] ॥१२॥
शौ ६ — यथा भूतं च भव्यं च न बिभीतो न रिष्यतः ।
एवा मे प्राण मा बिभेर् एवा मे प्राण मा रिषः ॥१३॥ ॥का° ५॥ ॥अनु° १॥ — ...पान * रिष

६.६

शौ १.३४.३ — मधुमन् मे निक्रमणं मधुमन् मे परायणम् ।
वाचा मधुमद् उद्यामाक्ष्यौ मे मधुसंदृशी ॥१॥ — * * उद्याम अक्षो ...
‡माम् अनुप्रसारयं स स पत्तो नि मे दिवाम्? ।
अथो ते पुनर् आयतो अक्षी कामेन शुष्यताम् ॥२॥ — ...क्षो * *
वशा मधुघ ते मातोक्षा आजर्षभ× पिता । — * मधुग * * आजऋषभः *
धेन्वा अधि प्रजातो ऽसि राजा स मधुमत्तमः ॥३॥ — धेन्वाधि ... सं *
वृषाणं वृष्ण्यावन्तं सा पर्णम् अभि शिष्यतम्? । — वि° ...
इन्द्राण्य् अग्र अभवं? मधुरी भगाय कम् ॥४॥ — * अग्राभरं ...
पितुमोजनो मधुघस् सौ×काम्यो? हृदयाय कम् । — * मधुगस् ...
स मा मधुना व्य् अनक्तु यथाहं कामये तथा ॥५॥ — * * * वकक्तु ...
सिन्धुप्रजानो मधुघो ऽश्वीव नीयते जनी अनु । — सिन्धु× प्रजानो मधुगो ...
स मा [मधुना व्य् अनक्तु यथाहं कामये तथा] ॥६॥ — * मां
मधुमती सिनीवाली मधुना मा सम् अक्षतु ।
सा मा मधुना व्य् अनक्तु यथाहं कामये तथा ॥७॥ — * * मधुनानक्तु * * *
शौ ६.१.२६.१ — यथा मधु मधुकृतस् संभरन्ति मधाव् अधि ।
एवा युनज्मि ते मनो अध्य् अस्यां मामकी तनू ॥८॥ — एवान् * * * ऽध्य् * * तनुं
यद् ते मनः परागतं यद् वम्? इह वेह वा । — वे तु ...
तद् तया वर्तयामसि अपि बध्नामि ते मनः ॥९॥ ॥का° १॥

६.७

कश्यपश् च सुपर्णश् च यन् मरीच्याम् अमिष्ठताम् । — कश्यपस्य सुपर्णश् ...
सुपर्ण× पर्य् अवापश्यत् समुद्रे भूमिम् आवृताम् ॥१॥ — * * °पश्चद् ...
सुपर्णम् अभि शिश्नतां पर्य् अपश्यद् अन्तर् महत्य् अर्णवे । — * * पश्वतां * अपश्च ...
तां सूकरत्वान् मायां तिरस् समुद्राद् उद् आभरत् ॥२॥ — * * माया ... आभर
यां समुद्राद् उदाभरद् भूम्यां सूकरमायाम्? । — * * उदुद्भरो * °माया
सैषा विषस्य दूषण्य् असौ भवतु भेषजी ॥३॥ — ... भवन्त *
अच्युता हिरण्येन या सत्ये अधितिष्ठति ।
तस्यास् ते विश्वधायसो विषदूषणम् उद् भरे ॥४॥

| | | |
|---|---|---|
| पै ३.१५.४ | यस्याः कुलायं [सलिले अन्तर् महत्य् अर्णवे । | अस्याः कुलायम् इत्यका (पूर्वत्र साकल्येना- |
| | [तस्यास् ते विश्वधायसो विषदूषणम् उद् भरे] ॥५॥ | [धीतत्वादत्र प्रतीकेन निर्देशः) |
| | यस्या भूम्या उपचीका उद् गृहं कृण्वतात्मने । | ...उपचीकाद् गृहं * |
| | तस्यास् ते विश्वधायसो विषदूषणम् उद् भरे ॥६॥ | |
| | यस् त्वा भूमिं नाविन्दद् यस् त्वा भूमिम् उदाभरत् । | * * * न विन्दद्... |
| | तयोस् सहस्रधामान्य् अहं नामानि जग्रभ ॥७॥ | * °धामंन्... °भः |
| | यान्य् उ इन्द्रो अकृणोद् भौमे नामानि वृत्रहा । | यानि ... |
| | तानि ते बभ्रोस् सं विद्मस् सहैव विषदूषणि ॥८॥ | ...°णी |
| | यानि ते मरुतश् चक्रुर् यानि सप्तर्षयो विदुः । | |
| | विश्व आदित्या यां विदुस् सा भूमिर् विषदूषणी ॥९॥ ॥का°२॥ | विश्वादित्या... |
| | ६.८ | |
| वा १२.९९ | सहस्व यातुधानान् सहस्व यातुधान्यः । | * °नां * °न्याः |
| | सहस्व सर्वा रक्षांसि सहमानास्य् ओषधे ॥१॥ | |
| | सहमाने सहस्वति सहन्त्याहम् उत्तरा । | * * संहत्या° * |
| | उताहम् अस्मि सासहि[स्] सहसेव सदान्वाः ॥२॥ | ...सधान्वा |
| | या सहमाना चरति सासहान इव वृषभः । | * °मान ... सासहानेव * |
| | सदान्वाघ्नी रक्षोघ्नी सा त्वम् उग्रास्य् ओषधे ॥३॥ | |
| | ¿खेलेहलंमनस्तनिनश्चेभःपुरामुतः पथानत्वाममभ्यतविहोअ- | |
| | क्षेवुश्टङ्गवच्छिरः ॥४॥ | |
| | ¿अमुवाने बहुपुत्रे अनंत्रश्च्ये महोदरि । | |
| | ¿पथस्सत्सत्तरे त्वं शर्करावप्सतीतर? ॥५॥ | |
| | य इरायाश् चरति पाकस्येच्छन् त्वा शुचिम् । | येरायाश् * °इछं... |
| "ऋ १०.१५५.२" | तान् अग्ने कृष्णावर्त्मने? तीक्ष्णशृङ्गोदृषन्न् इहि ॥६॥ | * * * °दृशंन् * |
| ऋ ३ | अदो यद् दारु प्लवते सिन्धोर् मध्ये अपूरुषम् । | |
| | तद् आ रभस्व दुर्हणो तेन याहि परस्तरम् ॥७॥ | उच् * रभस्य ... |
| | ¿अस्याजनिष्टम् इष्टर्गा? अरिष्टाः क्रिमयः पुरुषाय । | |
| | ¿तस्यै बलासपत्नी? नमः कृणोमि ॥८॥ | |
| | ¿कुष्ठी सर्वपुत्रे भव पत्रियादुत्रात्तस् सदान्वे? । | |
| | तस्याधि पुत्रान् भ्रातॄंश् च यत्र त्वा वि नयामसि ॥९॥ ॥का°३॥ | |
| | ६.९ | |
| तैब्रा २.४.७.१ | वृषायम् अंशुर् वृषभाय गृह्यते वृषायम् उग्रो नृचक्षसे । | * ऊत्तुर् ... |
| | दिव्यो निर् यो अचिक्रदन् बृहन् नामर्षभस्य यत् ककुत् ॥१॥ | * * * °क्रदं नहं ... |
| तैब्रा | विषूवान् वृष्ण्यो भवत्व् अयं यो नृपतिर् मम । | विषु° * भव त्वं * * * |
| | अथो इन्द्र इव देवेभ्यो वि ब्रवीतु जनेभ्यः ॥२॥ | * इन्द्रेव * वि विब्रवीतु * |
| | मनुषेभ्यो ऽधि ब्रवीतु सजूर् इन्द्रेण मेदिना । | |
| | अग्निश् च तुभ्यं सहन्त्यो? राष्ट्रं वैश्वानरो दधत् ॥३॥ | * * तुभ्यां ... |
| तैब्रा ३ | यस्यायं भाग ऋषभ इन्द्राय परिणीयते । | यस्मायं भागम् ऋषभम्... |
| | स हन्तु शत्रून् आयतो अथो हन्तु परायतः ॥४॥ | |
| | स हन्ता शत्रून् भवतु हन्ता भवतु दोधताम्? । | ... अहन्ता * * |
| | विषासहः प्रणीर् अयद् अग्र उद्भिन्वताम् असत् ॥५॥ | ...अग्र मधुभिर्दताव् * |
| तैब्रा | आयुष्मन्तं वर्चस्वन्तम् अथो अधिपतिं विशाम् । | |
| तैब्रा १,२ | अस्याः पृथिव्याश् चेत्तनेम्? इमम् इन्द्र वृषभं कृणु ॥६॥ | |
| ³तैब्रा पृथिव्या अध्यक्षम् | यस् सुशृङ्गस् सुवृषभः? कल्याणो बर्हिर् आसदत् । | अस्य शृङ्ग सुपक्ष्पदः * * * |
| तैब्रा २ | कार्षीवलप्रगाणेन ऋषभेन यजामहे ॥७॥ | कार्षीवणप्रजानेन... |
| | ऋषभेण यजमाना अक्रूरेणेव सर्पिषा । | * * क्रौरेणैव * |
| तैब्रा | मृधश् च सर्वा इन्द्रेण पृतनाश् च सहामहे ॥८॥ | ...सामहे |
| | यं तुभ्यं भागम् ऋषभं देवाः कैवल्यं ददुः । | |
| | तेन वृत्राणि जोहनश्? शत्रूंश् च जम्भ् आहवे ॥९॥ | |
| | जहि शत्रून् प्रति रन्धयस्व कृण्यात्? संभूतो ऽसि वीर्यवान् । | * सत्रून् प्रन् प्रति * कृण्यात्... वीर्यां° |

| | | |
|---|---|---|
| [1]शौ ९.५.२[1] | इन्द्राय भागं परि त्वा नयामो [अ]रुङ् नो लोको अपृतन्यो ऽस्तु ॥१०॥ | ...रुं * * * * |
| [2]शौ १३.१.२८[2] | घृतवृद्ध घृताहुत सहस्रभृङ्ग सुष्टुत । | ...सुष्टुतः |
| ऋ १.१२.५[1] | घृताहवन दी[दि]हि ॥११॥ | |
| तैब्रा ५ | यो घृतेनाभिघारित उग्रो जैत्राय तिष्ठसि । | * °रितम्... |
| | स नस् संकासु पारया पृतनासाह्येषु च ॥१२॥ ॥का° ४॥ | * * संकुसु... |
| | **६.१०** | |
| | कविस् सुभागर्षभस्य पत्नी प्रजाकामा वशिनी वाशिता गौः । | कवीस् * पत्नी× ... |
| | तां सहस्रम् एकमुखा ददाति गर्भं दधाना मिथुना चरन्ती ॥१॥ | |
| | गर्भं दधाना अप इद् दुहाना अग्निहोत्रं वैश्वदेवीद् दुहानाः । | * दधानापदुहानाग्निहोत्रं °वी दुहाना |
| | दौर्गमाहिंसीद्? वरुणस्य पत्नीः कक्र्यायानि? सुमनसो ऽभि गावः ॥२॥ | * * पत्नीं * स° * * |
| | प्रजाम् इच्छन्तो धिषणाश् चरन्तीमान् एत्व् अदिति[र्] विश्वरूपा । | * * °णश्... विश्वा° |
| | अभि क्रन्दन्ति भुवनान्य् उरूणि? ॥३॥ | * * * ऊनां |
| | प्रजापतिनेषिताम् ऋत्वियावतीं न हीनां प्रजाया ऋषभाश् श्रयन्ते । | * °वती ... ऋषभा * |
| | वृषण्यन्तीं वृषणस् सप्तनाम्नीं हिंकृण्वन्तो अभि नुदन्ति वाशिताम् ॥४॥ | °न्ती ... |
| | सा प्रत्युसनिस्? सुषदा सुवर्णा शुक्रं वसाना वरुणश् च निर् नुदः । | ...सुवर्णाश् * * * * निन् * |
| | वैश्वदेवी सुधयाम् आ रभन्ते प्रजां दाता पुष्यतु गोपतिष्ठे ॥५॥ | |
| | स्वयं स्थावरी वृषभाय तिष्ठति प्रतीची सोमं प्रति सूर्यम् अग्निम् । | * स्थावर्य वृवृषभाया तिष्ठिति ... |
| | अहिंसन्ती वाशितेमाम् उपेहि पशून् दाता पुष्यतु गोपतिष्ठे ॥६॥ | |
| | वशीदा? भवतु वाशितायाम् अग्नेर् भागम् उस्रियां यो ददाति । | |
| | प्रियं धाम हृदयं सौम्यं मधु वाजिनीं त्वा वाजिनो वाजयन्तु ॥७॥ | |
| | यो वाशितायां गव्य् अन्तर् अग्निर् यद् अस्यां नृम्णं महिना बभूव । | * वाशितायम् * अंतद्... नृम्णां * * |
| | नमस् ते ऽस्तु प्रतिगृह्णन् गृणामि स्योना मे ऽस्तु तन्वे सुशेवा ॥८॥ | * * * * गृणोमि... °वौ |
| | ¿येम गं वाशिता तां प्रतीम× पुंसां व्रातेन सा पुष्यमाना गौः? । | |
| | ऊर्जं दधाना घृतम् इद् दुहाना सहस्रपोषाय मे ऽस्तु दात्रे ॥९॥ | * * * * °नां °पोषाइ * * * |
| | ॥का° ५॥ ॥अनु° २॥ | |
| | **६.११** | |
| पै ५.२.२ | ब्रह्म जज्ञानं [प्रथमं पुरस्ताद् वि सीमतस् सुरुचो वेन आवः । | ब्रह्म जज्ञानमित्येका (पूर्वत्र साकल्येनाधीत- |
| | [स बुध्न्या उपमा अस्य विष्ठास् सतश् च योनिम् असतश् च वि वः] ॥१॥ | [त्वादत्र प्रतीकेन निर्देशः) |
| शौ ४.७.७,५.६.२ | अनाप्ता ये व× प्रथमा यानि कर्माणि चक्रिरे । | |
| | वीरा[न्] नो अत्र मा दभन् तद् व एतत् पुरो दधे ॥२॥ | ...दभं तद् वेतत् * * |
| ऋ ९.७३.६ | प्रज्ञान् मानात् परि ये संबभूवुश् श्लोकवन्तस् सौमनस्य मन्तवः । | प्रज्ञात्म:नात्...वंतवः |
| | अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः ॥३॥ | * बदिरमस्तन्तस्य पन्था ... |
| ऋ ४ शौ ५.६.३ | सहस्रधारम् अभि ते सम् अस्वरन् दिवो नाके मधुजिह्वा असश्चतः । | * * * समस्मरं ... अशश्यतः |
| | तस्य स्पशो न नि मिषन्ति भूर्णय× पदेपदे पाशिनस् सन्तु सेतवे ॥४॥ | * सरशो * * * तूर्णयः ... |
| ऋ ९.११०.१ शौ ४ | पर्यू ऊ षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः । | पर्युष * * वाज्ज° ... |
| | दिवस्तुदर्णवानूनीयसे? ॥५॥ | |
| शौ का ३८.?४ | सहस्रशो? नामासि त्रयोदशो मासः । इन्द्रस्य गृहो ऽसीन्द्रस्य | |
| | शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथम् असि ॥६॥ | शर्मासि इन्द्रस्य वर्मासि इन्द्रस वै° * |
| शौ ५ | व्य् एतेनारात्सीद् असौ स्वाहा । | |
| ऋ ६.७४.४[1.2] | तिग्मायुधौ तिग्महेती सुशेवा अग्नीषोमाव् इह सु मृडतं नः ॥७॥ | |
| शौ ६ | [अवैतेनारात्सीद् असौ स्वाहा] । | वीतेनावैतेनामैतेनरात्सीदद् असौ स्वाहा तिग्मा- |
| शौ ७ | [तिग्मायुधौ तिग्महेती सुशेवा अग्नीषोमाव् इह सु मृडतं नः] ॥८॥ | युधौ तिग्महेती सुशेवाग्नीषोमाविह सुमृधतं नः |
| | [अपैतेनारात्सीद् असौ स्वाहा] । | |
| शौ ८ | [तिग्मायुधौ तिग्महेती सुशेवा अग्नीषोमाव् इह सु मृडतं नः] ॥९॥ | |
| | मुमुक्तम् अस्मान् गृभीथाद् अवद्याज् जुषेथां यज्ञम् । | समुक्तम् अस्माद्... |
| शौ ९ | अमृतम् अस्मासु धत्तं स्वाहा ॥१०॥ | |
| | चक्षुषो हेते मनसो हेते ब्रह्मणो हेते [तपसश् च हेते] । | |
| | मेन्या मेनिर् असि अमेनयस् ते सन्तु ये ऽस्मान् अभ्यघायन्ति स्वाहा ॥११॥ | * * * अनेनयस् * * यो * अभ्यभायन्तु * |

| | | |
|---|---|---|
| | यो ऽस्मां[श्] चक्षुषा मनसा यश् च वाचाकूत्या चित्त्या ब्रह्मणाघायुर् | ... दि(भ्रान्ते चि)त्या * |
| | अभिदासा[त्] त्वम् अग्ने तं मेन्यामेनिं कृणु स्वाहा ॥१२॥ | * * * त्वं ... |
| शौ ५.९.८ | उद् आयुर् उत् कृत[म्] उद् बलम् उन् मनीषाम् । | * * * * बद् बलमं ननीषो |
| | उद् इन्द्रियं नृम्णम् अस्मासु धेहि स्वाहा ॥१३॥ | यद् इन्द्रं ... |
| शौ | आयुष्कृद् आयुष्मती स्वधावन्तौ गोपा मे स्थो गोपायतम् मा । | आयुष्कृतायुष्मती °वन्तो ... गोपायतन् वा |
| | आत्मसदौ मे स्तं मे सुशेवौ मा मा हिंसिष्टं स्वाहा ॥१४॥ ॥का° १॥ | °सधू * स्तन् वे सुशेनौ ... |
| | ६.१२ | |
| शौ ५.६.११ | इन्द्रस्य गृहो ऽसि [तं त्वा प्र विशामि सर्वं सर्वात्मा सर्वगुस् सर्व- | |
| | पूरुषो यन्? मे ऽस्तु तेन] ॥१॥ | |
| शौ १२ | [इ]न्द्रस्य शर्मासि [तं त्वा प्र विशामि सर्वं सर्वात्मा सर्वगुस् सर्व- | |
| | पूरुषो यन्? मे ऽस्तु तेन] ॥२॥ | |
| शौ १३ | इन्द्रस्य वर्मासि [तं त्वा प्र विशामि सर्वं सर्वात्मा सर्वगुस् सर्व- | |
| | पूरुषो यन्? मे ऽस्तु तेन] ॥३॥ | |
| शौ १४ | इन्द्रस्य वरूथम् असि तं त्वा प्र विशामि सर्वं सर्वात्मा सर्वगुस् सर्व- | * मर्हतम् * त ... सर्वा * * * |
| | पूरुषो यन्? मे ऽस्तु तेन ॥४॥ | पौरुषः सम् ये * * |
| शौ ५.९.७ | अस्तृतो नामाहम् अयम् अस्मि स आत्मानं परि दधे द्यावापृथिवीभ्यां | * * अयाम् * मात्मानं * * * |
| | गोपीथाय प्र ह्वयसे ॥५॥ | गोपीयाय * |
| | अस्तृतो नामा प्राजापत्यो देवपुरायं? अन्तः प्रहागां? देवपुरात् सह | |
| | ग्रामस् स्वस्तये ॥६॥ | |
| | ¿संवत्सरस्य सप्यतस् सर्वैस् सहोदरैस् सह प्रहणगां देवापुरायेवास्मि मे वनं | * * * सहोदरी सह । ओं सर्वैस्सहोदरी सह * |
| | ¿यो मा कश् चाभिदासति स प्रजापतिम् इव गच्छिति? ॥७॥ | [ * * * |
| | अस्मासु प्रतिस्पशः पाहि रिषः पाहि द्विषः पाह्य् अदेव्या अभि- | * °स्मशः ... पाहि देव्याभि- |
| | शस्त्यास् स म इह तन्वं पाहि ॥८॥ | शस्त्याव् स मीय * * |
| शौ ५.१०.१ | यो [अ]स्मान् प्राच्या दिशो ऽघायुर् अभिदासा[द्] पतत् स ऋच्छाद् | ... दित्साद् |
| | अश्मवर्म णो ऽस्तु ॥९॥ | |
| शौ २ | [यो] अस्मान् दक्षिणाया दिशो [ऽघायुर् अभिदासाद् पतत् स ऋच्छाद् | * अस्मां ... |
| | अश्मवर्म णो ऽस्तु] ॥१०॥ | |
| शौ ३ | [यो] अस्मान् प्रतीच्या दिशो [ऽघायुर् अभिदासाद् पतत् स ऋच्छाद् | |
| | अश्मवर्म णो ऽस्तु] ॥११॥ ॥का° २॥ | |
| | ६.१३ | |
| शौ ५.१०.४ | [यो] अस्मान् उदीच्या दिशो [ऽघायुर् अभिदासाद् पतत् स ऋच्छाद् | |
| | अश्मवर्म णो ऽस्तु] ॥१॥ | |
| शौ ५ | [यो] अस्मान् ध्रुवाया दिशो [ऽघायुर् अभिदासाद् पतत् स ऋच्छाद् | |
| | अश्मवर्म णो ऽस्तु] ॥२॥ | |
| शौ ६ | यो [अ]स्मान् ऊर्ध्वाया दिशो ऽघायुर् अभिदासाद् [प]तत् स ऋच्छाद् | ... रित्साद् |
| | अश्मवर्म णो ऽस्तु ॥३॥ | अश्मावर्म ... |
| | प्राच्यै दिशे स्वाहा ॥४॥ | प्रच्यै ... |
| | दक्षिणायै दिशे स्वाहा ॥५॥ | |
| | प्रतीच्यै दिशे स्वाहा ॥६॥ | प्रतीचै ... |
| | उदीच्यै दिशे स्वाहा ॥७॥ | |
| | ध्रुवायै दिशे स्वाहा ॥८॥ | |
| | ऊर्ध्वायै दिशे स्वाहा ॥९॥ | |
| शौ ५.९.१,५ | दिवे स्वाहा ॥१०॥ | |
| शौ ३,४ | अन्तरिक्षाय स्वाहा ॥११॥ | |
| शौ २,६ | पृथिव्यै स्वाहा ॥१२॥ ॥का° ३॥ | देवे स्वाहा ॥ इति राक्षोघ्नसूक्तम् ॥ |
| | ६.१४ | |
| अपपाठबहुलो ऽयं काण्ड आत्मानं न | महाकण्ठं करीषजम् अवद्ध्यादम् अनाहुतम् । | * करीषाजम् ... |
| विवृणोति | ओष्ठः कोकमुखश् च यस् तान् इतो नाशयामसि ॥१॥ | * कोखमु° ... ताय् * * |

रासमदन्तं? सोदरं प्रहारम् अहिनासिकम् उपवृत्रं वलाहकं खेनं शर्दे-
मनादिनम् ।
गृद्धूं ¿हस्त्यायनं त्या प्रमृष्याविन सत्यमं? [तान् इतो नाशयामसि] ॥२॥
भीमहस्तं सरीसृपं भ्रष्टाक्षं मृद्वङ्गुलिम् ।
¿नखोग्रं दंशवीर्यं तां पर्यन्दमि भिपापदं? [तान् इतो नाशयामसि] ॥३॥
जिगीषमाणो रूपकम् अथो शलल्यं शेवलताम्? ।
¿तण्डम् अग्रे तुण्डिक दल्यंश? उत वत्सपं [तान् इतो नाशयामसि] ॥४॥
¿दासग्रन्थ्यं सनिस्रसम् उद्गण्येदं चारुस्यन्तां? ।
इदियज्ञान? केशवं रक्षश् चरत्य् आहुतं [तान् इतो नाशयामसि] ॥५॥
बर्हि× प्रेदम् इच्छति ¿अस्यौ नपास्योश् चगे ।
¿ज्ञानु रा यां शु कि ह्य न स्? तान् इतो नाशयामसि ॥६॥
¿य× कुमारां जरस्यामि तणां दासासुर् अराय× के
¿ह्या कि ल न यो ह ना न हं त्व क्ति च? तम् इतो नाशयामसि ॥७॥
हीराक्षो नाम गेह्यो ऽरायो नाम सूनुहा ।
तम् इतो नाशयामसि ॥८॥
¿नितूलंभक्षम् आखिदं वनक्रोशं च रोरुहम् ।
¿आमादं प्रयतीपिणं पर्यदानं परिद्रवं वृकस्य नृचगं भ्राणं? तान् इतो
नाशयामसि ॥९॥ ॥का°४॥

६.१५

यश् च भूमा या च स्फातिर् या चोर्जा यो रसश् च ते ।
हरामि शक्र तान् अहं त्वया प्रत्तान् शचीपते ॥१॥
क्षेत्रात्क्षेत्राद् आ हरामि स्फातिं सर्वां शचीपते ।
तयाहं वृत्रहन् पितुम् आ हरामि गृहीं उप ॥२॥
यास् ते सीता भगा× क्षेत्र आराधिर्? यश् शचीपते ।
अथो या निष्ठा ते क्षेत्र इत आहार्षि ब्रह्मणा ॥३॥
यत् खले रसम् आ[द]दे यद् गोष्ठे यच् च शेवधौ ।
अथोत्कुस्यांसे? तस्य ते रसम् आ ददे ॥४॥
ऊर्जा या ते ¿नृपतस्योर्जा यावहतस्य? ते ।
ऊर्जां ते पच्यमानस्योर्जां पिष्टां त आ ददे ॥५॥
[ऊर्जा या] ते ¿नृपतस्योर्जा वाता अस्य? ते ।
ऊर्जां ते पिष्यमानस्योर्जां पक्वां त [आ ददे] ॥६॥
ऊर्जा या ते प्रदुग्धस्योर्जा या मथितस्य ते ।
ऊर्जां ते दुह्यमानस्योर्जां दुग्धां त आ ददे ॥७॥
आ ते ददे गवाम् ऊर्जाम् ऊर्जाम् अवीनाम् आ ददे ।
अजानाम् ऊर्जाम् आदायात पेकशफाम् आ ददे ॥८॥
ऊर्जा या ते पुरुषाणाम् ऊर्जा चि त्ते च वे थे? ।
ऊर्जां ते सर्वेषाम् अहं गृहाणां ब्रह्मणा ददे ॥९॥ ॥का°५॥

ऋ १.१८७.१–७,९,८,१०,११
[का४०.८

६.१६

पितुं नु स्तोषं महो धर्माणं तविषी[म्] ।
यस्य त्रितो व्य् ओजसा वृत्रं विपर्वम् अर्दयत् ॥१॥
स्वादो पितो मधो पितो वयं त्वा विवृङ्महे? ।
अस्माकम् अविता भव ॥२॥
उत न× पितव् आ गहि शिवश् शिवाभिर् ऊतिभिः ।
मयोभूर् अद्विषेण्यस् सखा सुशेव एधि नः ॥३॥
तव त्ये पितो रसा रजांस्य् अनु विष्ठिताः ।
दिवि वाता इव श्रिताः ॥४॥
तव त्ये पितो ददतस् तव स्वादिष्ठ ते पितो ।
प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥५॥
यत् ते पितो महानां देवानां मनो हितम् ।

रामदन्त सोदनं ...
* °सूपं(प्रान्ते पाठः सरीसृशं) अस्ताक्षं *
जिगीष्माणो ...
बर्हिः(उपरि हिः)...
...ताय् * *
...राय नाम सुतुह
...ताय् *
* * भौमा * * स्फाति ययोर्जे * रस स्य *
हवामि * .तां हन् तय * *
...स्फांसी * *
* वृत्नहं पतुम्...
यस् * * भगा ... चशीयते
...इत्व् * *
* * नमय्...
...दधे
ऊर्जं * °र्जं पिष्टाव् तादधे
ऊर्जं * पिष्यमा° पक्वा ते
...प्रणुग्धस्योजा * मथितस्य *
ऊर्जा ... °र्जं * तादहे
* * तदे * ऊर्जम् * अवित्या दधे
अजाथ ऊर्जोम् * एकशपा दधे
* * * पुरुषूर्जा *
ऊर्जा ...
* न ...
...विपर्यम् *
उत्त * पित्तव् (पितुव्?)...
...स्वातिष्ठ * *
...तुम्यग्रीवा *

| | | |
|---|---|---|
| | अकारि चारु केतुना तवाहिम् अवसावधीत् ॥६॥ | |
| | यद् अदु× पितो अजगन् विवस्व पर्वतानाम् । | |
| | अत्रा चिन् नो मधो पितो [अ]रं भक्षाय गम्याः ॥७॥ | * * * मधु ... गर्म्या |
| | यत् ते सोम गवाशिरो यवाशिरो भजामहे । | * * * गवाशिरो ... |
| | वातापे पीव इद् भव ॥८॥ | |
| ²ऋ का परिंशम् | यद् अपाम् ओषधीनां बलिंसम्? आरिशामहे । | |
| | वातापे पीव इद् भव ॥९॥ | |
| | करम्भ ओषधे भव पीवो वृक्क उदारथिः । | करम्ब ... |
| | वातापे पीव इद् भव ॥१०॥ | |
| | तां त्वा वयं पितो वचोभिर् गावो न हव्या सुषूदिम । | तं ... |
| | अस्मभ्यं त्वा सधमादं देवेभ्यस् त्वा सधमादम् ॥११॥ ॥का° ६॥ | अस्माभ्यं * सदमादं ... सदमादम् |

६.१७

| | | |
|---|---|---|
| ऋ १.१९.१,२,३,५,४,६–९ | प्रति त्यं चारुम् अध्वरं गोपीथाय प्र हूयसे । | |
| | मरुद्भिर् अग्न आ गहि ॥१॥ | |
| | नहि देवो न मर्त्यो महस् तव क्रतुं परः । | ...पुराः |
| | मरुद्भिर् अग्न आ गहि ॥२॥ | |
| | ये महो रजसो विदुर् विश्वे देवासो अद्रुहः । | य मोह ... |
| | मरुद्भि[र् अग्न आ गहि] ॥३॥ | |
| | ये शुभ्रा घोरवर्पसस् सुक्षत्रासो रिशादसः । | ... रिषादसः |
| | मरुद्भि[र् अग्न आ गहि] ॥४॥ | |
| | य उग्रा अर्कम् आनृचुर् अनाधृष्टास ओजसा । | ...आनृतर् अनादृष्टास * |
| | मरुद्भि[र् अग्न आ गहि] ॥५॥ | |
| | ये नाकस्याधि रोचने दिवि देवास् सद्वासते । | |
| | मरुद्भि[र् अग्न आ गहि] ॥६॥ | |
| | य ईङ्खयन्ति पर्वतान् तिरस् समुद्रम् ओजसा । | अयं क्षयन्ति पर्वतां ... |
| | मरुद्भि[र् अग्न आ गहि] ॥७॥ | |
| | आ ये तन्वन्ति रश्मिभिस् तिरस् समुद्रम् अर्णवम् । | |
| | मरुद्भि[र् अग्न आ गहि] ॥८॥ | |
| | अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । | * * °पीतय ... |
| | मरुद्भि[र् अग्न आ गहि] ॥९॥ | |
| | आ यन्तु मरुतो गणै[स्] स्तुता दधतु नो रयिम् । | |
| ऋ १.१४.२ | आ त्वा कण्वा [अ]हूषत गृणन्तु विप्र ते धियः । | |
| | मरुद्भिर् अग्नं आ गहि ॥१०॥ ॥का° ७॥ ॥अनु° ३॥ | |

६.१८

| | | |
|---|---|---|
| शौ ७.३३.१ | सं मा सिञ्चन्तु मरुतस् सं पूषा सं बृहस्पतिः । | |
| | सं मायम् अग्निस् सिञ्चतु प्रजया च धनेन च । | |
| | दीर्घम् आयु× कृणोतु मे ॥१॥ | |
| | सं मा सिञ्चन्त्व् आदित्यास् सं मा सिञ्चन्त्व् अग्नयः । | |
| | इन्द्रस् सम् अस्मान् सिञ्चतु [प्रजया च धनेन च । | |
| | [दीर्घम् आयु× कृणोतु मे] ॥२॥ | |
| | [सं मा] सिञ्चन्त्व् अरुषास् सम् अर्का ऋषयश् च ये । | * * * अनुषा ... |
| | पूषा सम् [अस्मान्] सिञ्चतु [प्रजया च धनेन च । | |
| | [दीर्घम् आयु× कृणोतु मे] ॥३॥ | |
| | [सं मा सिञ्चन्तु] गन्धर्वाप्सरसस् सं मा सिञ्चन्तु देवताः । | |
| | भगस् सम् [अस्मान् सिञ्चतु प्रजया च धनेन च । | |
| | [दीर्घम् आयु× कृणोतु मे] ॥४॥ | |
| | [सं मा] सिञ्चतु पृथिवी सं मा सिञ्चन्तु या दिवः । | |
| | अन्तरिक्षं सम् [अस्मान् सिञ्चतु प्रजया च धनेन च । | |

[दीर्घम् आयु× कृणोतु मे] ॥५॥
[सं मा] सिञ्चन्तु प्रदिशस् सं मा सिञ्चन्तु या दिशः ।
आशास् सम् [अस्मान् सिञ्चन्तु प्रजया च धनेन च ।
[दीर्घम् आयु× कृणोतु मे] ॥६॥
[सं मा] सिञ्चन्तु कृषयः सं मा सिञ्चन्त्व् ओषधीः ।
सोमस् सम् [अस्मान् सिञ्चतु प्रजया च धनेन च ।
[दीर्घम् आयु× कृणोतु मे] ॥७॥
[सं मा] सिञ्चन्तु नद्यस् सं मा सिञ्चन्तु सिन्धवः ।
समुद्रस् सम् [अस्मान् सिञ्चतु प्रजया च धनेन च ।
[दीर्घम् आयु× कृणोतु मे] ॥८॥
सं मा सिञ्चन्त्व् आपस् सं मा सिञ्चन्तु वृष्टयः ।
सत्यं सम् अस्मान् सिञ्चतु प्रजया च धनेन च ।
दीर्घम् आयु× कृणोतु मे ॥९॥ ॥का° १॥

६.१९

सं भर्गो वर्चसा माग्ने सं विष्णु× पुष्ट्यासृजत् ।
क्षेत्रं सम् अस्मान् सिञ्चतु प्रजया च धनेन च ।
आयुष्मन्तं कृणोतु माम् ॥१॥
सं विराड् वर्चसा माग्ने सं देष्ट्री पुष्ट्यासृजत् ।
इडा सम् अस्मान् सिञ्चतु प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥२॥
सं धाता वर्चसा माग्ने सं सिक्कि× पुष्ट्यासृजत् ।
सं देवो [अ]स्मान् अर्यमा प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥३॥
सम् अंशो वर्चसा माग्ने सं वायु× पुष्ट्यासृजत् ।
वातस् सम् अस्मान् सिञ्चतु प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥४॥
सं सभा वर्चसा माग्ने सं सरा पुष्ट्यासृजत् ।
सूर्यस्? सम् [अस्मान् सिञ्चतु प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥५॥
सं सविता वर्चसा माग्ने सं सूर्य× पुष्ट्यासृजत् ।
चन्द्रस् सम् [अस्मान् सिञ्चतु प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥६॥
सं पशवो वर्चसा [मा]ग्ने सं यज्ञ× पुष्ट्यासृजत् ।
दक्षिणा सम् [अस्मान् सिञ्चतु प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥७॥
सं मा सिञ्चतु द्रविणं सं मा सिञ्चत्व् इन्द्रियम् ।
तेजस् सम् [अस्मान् सिञ्चतु प्रजया च धनेन च ।
[आयुष्मन्तं कृणोतु माम्] ॥८॥
सं मा सिञ्चन्तु वर्चांसि सं मा सिञ्चन्तु भूतयः ।
सरस्वती सम् अस्मान् सिञ्चतु प्रजया च धनेन च ।
आयुष्मन्तं कृणोतु मा[म्] ॥९॥ ॥का° २॥

शौ १९.४७.१-१०

६.२०

आ रात्रि पार्थिवं रज× पितुर् अप्रायि धामभिः ।
दिवस् सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥१॥
न यस्या× पारं ददृशे न योयुवद् विश्वम् अस्यां नि विशते यद् एजति ।
अरिष्टासस् त उर्वि तमस्वति रात्रि पारम् अशीमहि भद्रे पारम्
अशीमहि ॥२॥
ये ते रात्रे नृचक्षसो द्रष्टारो नवतिर् नव ।

- आशा...
- संमास्सं
- * * * नम्यस्...
- समुद्रास्...
- * मास्...
- सर्गा...
- चन्द्र...
- सा...
- ...पितर× प्रायु *
- * सुधांसि वृहती व * * त्वेशं...
- ...योयवद् यस्य सत्यां निमिषते रेजति
- अरिष्ठ शस्य च उदुर्वति सस्य च रात्रि * * * *
- ए * * * दृष्टारो * नवः

| | | |
|---|---|---|
| | अशीतिस् सन्त्व् अष्टा उतो ते सप्त सप्ततिः ॥३॥ | * * आष्टा ... |
| | षष्टिश् च षड् उ च रेवति पञ्चाशत् पञ्च नशंनिहि? । | ष्टयुश् ... रेवत्यं चाशत् यंच * |
| | चत्वारश् चत्वारिंशच् च त्रयस् त्रिंशच् च वाजिनि ॥४॥ | ... वादिनि |
| | द्वा च विंशतिश् च ते रात्र्य् एकादशावमाः । | ... रात्री एकादशावमा |
| ^५^नु इति सायणः । शौ न | तेभिर् नो [अ]द्य पायुभिर् नु पाहि दुहितर् दिवः ॥५॥ | ... नू * दुहितंर् * |
| ६–९ मन्त्राणां शौनकोशेपु तदनुक्रम- | रक्षा माकिर् णो अघशंस ईशत मा नो दुश्शंस ईशत । | |
| ण्यां च नाना विभागः संख्यातिश्च | मा नो [अ]द्य गवां स्तेनो मावीनां वृक ईशत । | ... मावैनां वृकैषतः |
| | माश्वानां भद्रे तस्करो मा नृणां यातुधान्यः ॥६॥ | सा°(प्रान्ते मा) ... |
| | परमेभिः पथिभि[स्] स्तेनो धावतु तस्करः । | ... दावतु * |
| | परेण दत्वती रज्जुः परेणा[घा]युर् अर्षतु ॥७॥ | ... अक्षतु |
| [१]शौ कोशेपु अध, अन्ध | अन्धो? रात्रि तिष्ठधूमम् अशीर्षाणम् अहिं कृणु । | ... °णिम् * * |
| | हनू वृकस्य जम्भयास् तेन तं द्रुपदे जहि ॥८॥ | हनो * जम्मया द्वैनं नृपते * |
| | त्वयि रात्रि विशामसि स्वपिष्यामसि जागृहि । | तै * * सपुष्टयामसि जागृवि |
| | गोभ्यो नश् शर्म यच्छाद् अश्वेभ्यः पुरुषेभ्यः ॥९॥ ॥का°३॥ | |
| शौ १९.४८.१–६ | ६.२१ | |
| | अथो यानि तमस्सहे? यानि चान्तः परीणहि । | ... परेणिहि |
| | तानि ते परि दद्मसि ॥१॥ | * ये * दध्मसि |
| | रात्रि मातर् उषसे नः परि देहि । | ... ना * धेहि |
| | उषा नो अह्ने परि ददात्व् अहस् तुभ्यं विभावरि ॥२॥ | जुषा * अह्ना ... |
| | यदि किं चेदं पतेद् यदि किं चेदं सरीसृपम् । | ... देदं * |
| | यदि किं च ¿पद्वद् आसुन्वन्? तस्मा[त्] त्वं रात्रि पाहि नः ॥३॥ | ... ना |
| | सा पश्चात् पाहि सा पुरस् सोत्तराद् अधराद् उत । | * * साहि मा ब्रस् सत्तराद् * * |
| | गोपाय नो विभावरि स्तोतारस् त इह स्मसि ॥४॥ | |
| | ये रात्रिम् अनुतिष्ठन्ति ये च भूतेषु जाग्रति । | ... °भि |
| | पशून् ये सर्वान् रक्षन्तु ते न आत्मसु जाग्रतु ते नः पशुभिर् जाग्रतु ॥५॥ | * * * * * नात्वमसि जाग्रतु ... |
| | वेद वै रात्रि ते नाम घृताची नाम वा असि । | ... नामि वासि |
| | तां त्वा भरद्वाजो वेद सा नो वित्ते ऽधि जागृहि ॥६॥ ॥का°४॥ | ... जागृवि (प्रान्ते पितृसूक्तम्) |
| | ६.२२ | |
| शौ ४.३४.१ | ब्रह्मास्य शिरो बृहद् अस्य पृष्ठं वामदेव्यम् उदरम् ओदनस्य । | ब्रह्मासि ... |
| | छन्दांसि पक्षौ मुखम् अस्य सत्यं विष्टा[री] यज्ञस् तपसो ऽधि जातः ॥१॥ | ... जाता |
| शौ २ | अनस्थाश् शुद्धाः पवनेन पूताश् शुचयश् शुचीन् अपि यन्ति लोकान् । | अनस्ताश् ... [ष्णां ... लोक * स्तीणिम् * |
| | नैतेषां शिश्नं प्र दहति जातवेदास् स्वर्गे लोके बहु स्त्रैणम् एषाम् ॥२॥ | नैष्टिषां सिष्णं प्र दहाज् जातवेदाः नैष्टिषां सि- |
| शौ ३[१.३.४],४[२] | विष्टारिणम् ओदनं ये पचन्ति नैनान् यमः परि मुष्णाति रेतः । | ... रेता (३[१],२[३] द्विः,२[४],३[२] इति कोशे पाद- |
| | आस्ते यम उप याति देवान् सं गन्धर्वैर् मदते सौम्यैः ॥३॥ | यास्ते ... असदिति स्योम्यैः [क्रमः) |
| शौ ४[१.३.४],३[२] | विष्टारिणम् ओदनं ये पचन्ति नैनान् अवर्तिस् सचते कुतश् चन । | * * * * नैननिवन्ति सजते ... |
| | रथी ह भूत्वा रथयान ईयते पक्षी ह भूत्वाति दिवं सम् एति ॥४॥ | * य * रथयान् * य भूत्वाप्य दिवं शमयति |
| शौ ५[१.२] | एष यज्ञो विततो बहिष्ठो विष्टारपक्को दिवम् आ ससाद ॥५॥ | |
| शौ ७ | चतुष्कुम्भ्यं चतुर्धा ददाति क्षीरेण पूर्णम्? उदकेन दध्ना । | °कु(उपरि कु)म्भ्यां ... प्रजा * * |
| | एतास् त्वा कुल्या उप यन्ति विश्वहा स्वर्गे लोके स्वधया पिन्वमानः ॥६॥ | ... °ना |
| शौ ६ | घृतह्रदा मधुकुल्या[स्] सुरोदकाः क्षीरेण पूर्णा उदकेन दध्ना । | * * स्वरोदका ... |
| | एतास् त्वा कुल्या उप यन्ति विश्वतस् स्वर्गे लोके स्वधया मादयन्तीः ॥७॥ | * * नुल्या ... लोक * °ती |
| शौ ५[३.४] | पुण्डरीकं कुमुदं सन् तनोति बिसं शालूकं शफको मुलाली । | * कुमिदं ... विशं शालखं शपखो * |
| | स्वर्गे लोके स्वधया पिन्वमाना उप मा तिष्ठन्ति पुष्करिणीस् सम- | * * स्वधय ... |
| | न्ताः ॥८॥ | °न्त |
| शौ ८ | यम् ओदनं पचसि ¿मिश्रद् दधानो? विष्टारिणं लोकजितं स्वर्ग्यम् । | ... °जितियं * |
| | स मे मा क्षेष्ट मदम् इष्यमाणो विश्वरूपा कामदुघा धेनुर् अस्तु मे ॥९॥ | |
| | वृषभं सन्तं सहं सूनृताय स्वर्गे लोके अमृतं दुहानम् । | * * सह सौनृतया ... दुहाने |
| | य इमे पुत्राः पितरश् च सन्ति ते त्वा विष्टारिन्न् उप सर्वे सदेयुः ॥१०॥ | ये मे * * * सति * * °रिद् ... |

| | | |
|---|---|---|
| शौ २ क्र ११ | इन्द्रावरुणा मधुमत्तमस्य वृष्णस् सोमस्य वृषणा वृषेथाम् । | ...वृष्ण्यस् * * वृषेता |
| | इदं वाम् अस्मे परिषिक्तम् अन्ध आसद्यास्मिन् बर्हिषि मादयेथाम् ॥६॥ | * * अस्मै * इन्धासद्यास्मि * * |
| शौ ७.२७.३ | उरु विष्णो वि क्रमस्वोरु क्षयाय नस् कृधि । | |
| | घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥७॥ | * * पिब...तर |
| शौ ८ | दिवो विष्ण उत वा पृथिव्या उरोर् वा विष्णो महो अन्तरिक्षात् । | * विष्ण...विष्णु * * |
| | उभा हि हस्ता मधुना पृणस्वाप्रयच्छ दक्षिणाद् ओत सव्यात् ॥८॥ | उभा ए अस्मिर् मधुना * * ओदोत हस्ता |
| शौ १ क्र १.१५४.१ | विष्णोर् नु कं प्र वोचं वीर्याणि यः पार्थिवानि विममे रजांसि । | विष्णुं * कां प्र वोच... |
| | यो अस्कभायद् उत्तरं सधस्थं विचक्रमाणस् त्रेधोरुगायः ॥९॥ | ...सधस्तं * त्रधो° |
| शौ २^{१-२}, ३^{१-२} क्र २ | प्र तद् विष्णु[स्] स्तवते वीर्याणि मृगो न भीमः कुचरो गिरिष्ठाः । | ...नं * * * |
| | यस्योरुषु त्रिषु विक्रमणेष्व् अधिक्षियन्ति भुवनानि विश्वा ॥१०॥ ॥का° १॥ | ... ॥१॥ |

२०.७

| | | |
|---|---|---|
| शौ ७.३०.२,१ | अग्नाविष्णू महि धाम प्रियं वां पाथो घृतस्य गुह्यानि ? नाम । | * मयि * * * पातङ् * गुह्यनि * |
| | दमेदमे सुष्टुत्या वावृधानौ प्रति वां जिह्वा घृतम् आ चरण्यात् ॥१॥ | * * वावृधानोप वां * * * चरण्यः |
| शौ १, २ | अग्नाविष्णू महि तद् वां महित्वं वीथो घृतस्य गुह्या जुषाणा । | अग्नाविष्णु मगि * * * पातङ् * * जुषाणः |
| | दमेदमे सप्त रत्ना दधानौ प्रति वां जिह्वा घृतम् उच् चरण्यात् ॥२॥ | * * रत्ना दधानो...उश् चरण्यः । ओ° अप्रति |
| शौ ७.१९.१ तै सं २.४.८.२ [मै सं १.३.२६ | उन् नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः । | ओ° उन्... [वां जिह्वा घृतम् उच्चरण्यः |
| | उद्नो दिव्यस्य नो धातर् ईशानो वि ष्या विलम् ॥३॥ | उभ्नो * * धातुर् * * षा * |
| शौ ७.११०.१ | अपक्रामन् पौरुषेया[द्] गृणानो दैव्यं सह[ः] । | अपक्रामं... |
| | प्रणीतीर् अभ्य् आ वर्तस्व देवो देवानां सख्या जुषाणः ॥४॥ | पुणीतर् * * वर्चस्व * देवाना * * |
| | पितोर् अहं पितुम् अदन् तिद् ? ईळे धाता विधर्ता भुवनेष्व् एषु । | |
| | नेमेन मह्यं मधुवाङ् वैधि नेमेनामुष्मै पितुवाङ् वैधि ॥५॥ | * मुखं मधुवी * नेमेनाममुष्मै मिथुनी * |
| | अयं पिता पितुवाङ् आभृतस्य यदीदं शृणोति यद् अहं ब्रवीमि । | ...शृणोत इद् * * |
| | [नेमेन मह्यं मधुवाङ् वैधि नेमेनामुष्मै पितुवाङ् वैधि] ॥६॥ | |
| | अत्रैवैनं निर्ऋत आ रभस्वात्रैवैनं निर्ऋते प्र क्षिणीह्य् अत्रैवैनं सर्वे वि वृश्च । | * निर्ऋता रभ° * * क्षिणिह् * सर्वे * * |
| | नेमेन मह्यं मधुवाङ् वैधि नेमेनामुष्मै पितुवाङ् वैधि ॥७॥ | * * मधुवे * * मिथुवो * |
| | तत् त्वा पितर् उप ब्रुवे तन् नो शृण्व् अस्मिन् निहवे हव्यो यथासः । | उ * पितुर्...आसि * हव्यं * |
| | इमं देवी निर्ऋतिस् संविदाना मुथ् ? छिनत्ति वरुणस्य पाशात् ॥८॥ | अमं देवीं निं°... |
| शौ ७.१११.१ | यद् अस्मृति च[कृ]मा किं च तेनोपारिम ? [च]रणैर् जातवेदः । | ...रणैर् * |
| | तस्मात् पाहि त्वं नः प्रचेतश् शुभे सखिभ्यो अमृतत्वम् अस्तु नः ॥९॥ | * * तन्व प्रचेतश् शुखे शिखिभ्यो अमृ° असमन् |
| | अग्ने ऽध्यक्षो न एधि पाहि नो दुरिताद् पाहि । | * * नेधि * * * * |
| | दुष्वप्न्या अशान्या [अ]जन्याद् यक्ष्मान् नः पाहि ॥१०॥ ॥का° २॥ | * आसन्या... ॥२॥ |

२०.८

| | | |
|---|---|---|
| | त्विषिर् असि त्विषिवन्तो भूयास्म चक्षुष्मन्तो गोमन्तः प्रजावन्तो वर्चस्विनः ॥१॥ | ...त्विषीवन्तो... |
| | यद् उग्र आसिञ्चन्न् अतः क्षीरम् अतो दधि । | * अभ्यासिञ्चन् * क्षीरञ् * * |
| | इदं तद् विश्वरूपं वः पयो हरामि वीरुधा[म्] ॥२॥ | * तं विश्वरूपा... |
| | यद् उग्र ओषधीभ्यो ऽद्भ्यस् संभरथा मधु । | * अभ्या उष° द्भिस् सम्भरता * |
| | इदं तद् विश्वरूपं वः पयो हरामि वीरुधाम् ॥३॥ | * ततद् °रूपा... |
| कौशिकसूत्रे ४६.५५ | यो ऽभ्य् उ बभ्रुणायसि स्वपन्तम् इच्छ पुरुषं शयानम् अकाश्चिलम् ? । | * भ्य बभ्रूणायसि स्वपन्तीम्... |
| | अयस्मयेन वर्मणाश्ममयेन वर्मणा यो ऽस्मान् वरुणो दधत् ॥४॥ | |
| | ये नो गृहे ब्रह्मणा मन्यमाना घोरां वाचं मिथुया नो ब्रुवन्ति । | { यो...मन्यमानो...न * । यो नो गृहे ब्रह्मणा मन्यमानो घोरां वाचं मिथुया न ब्रुवन्ति |

| | | |
|---|---|---|
| | ये नो रुचो बलिरुचो भवन्तु दुर्योणम् अस्मत् परि ते हरन्तु ॥५॥ | यो * * °रुचं * * अस्सद् पलि * * |
| शौ ७.६४.१ | अयम् अग्निस् सत्पतिर् वृद्धवृष्णो रथीव पत्तीन् अजयत् पुरोहितः । | * * स्वतपति वृद्धिवृष्णो रथेन पत्ती जनयद् * |
| | नाभा पृथिव्या निहितो दविद्युतद् अधस्पदं कृणुतां ये पृतन्यवः ॥६॥ | * * निहतो तविद्युत ... |
| शौ ७.७७.१० | अंग्ने शंर्धं महते सौभगाय तव द्युम्नान्य् उत्तमानि सन्तु । | * * महते ... |
| | सं जास्पत्यं सुयमम् आ कृणुष्व [श]त्रूयताम् अभि तिष्ठा महांसि ॥७॥ | ... कृणुष्व श्रूयताम् * * * |
| शौ ७.३५.१^१-२ | अग्ने सपत्नान् प्र णुद जातान् प्र[त्य् अजातान्] जातवेदश् शृणीहि । | अग्ने * पृ णुत ... |
| | अधि नो ब्रूहि सुमनस्यमानश् शर्म यच्छ त्रिवरूथम् उद्भित् ॥८॥ | ... सुमनस्यमानश् शर * * उदभृत् |
| शौ ७.३६.१ | प्राम्यान् सपत्नान् सहसा सहस्व प्रत्य् अजातान् जातवेदो नुदस्व । | परान्यां ... प्रत्य् अजातां * * |
| | इदं राष्ट्रं पिपृहि सौभगायातु त्वा देवा [व]सवो जुषन्ताम् ॥९॥ ॥का° ३॥ | * * पिवर्हिं सोभिगायअनु ... ॥३॥ |
| | **२०.९** | |
| | यो नो मित्रावरुणा अभिदासात् सपत्नस् स उत्पिपानो बृहस्पते । | * * मित्रो वरुणो भिधासा सपत्नो सोत्पिवानं * |
| | सर्वं तम् अग्ने अधरं पारयास्मद् यथेन्द्राहम् उत्तमश् चेतयानि ॥१॥ | * तद् ... |
| | अहम् एषाम् उत्तमश् चेतयानि मम वशाम् उप तिष्ठन्तु सर्वे । | |
| | आजुह्वानो घृतपृष्ठस् सुवर्चा वसोर् मध्ये दीदिहि जातवेदः ॥२॥ | ... वसोन् * दीदिह * |
| | इमम् अग्ने अधरं पारयास्मद् व्यायाम उत्पिपानं सपत्नम् । | इमम् अग्ने अधरं * व्यासयोत्पिपानं सपत्नम् |
| | ये नः पूर्वा नो ऽधरे ते भवन्तु विश्वा द्वेषांस्य् अभितो नु वृङ्धि ॥३॥ | यो नो * न ... वृढि |
| | मूर्धानं दिवो अरतिं पृथिव्या वैश्वा श स्त्वा ? सर्वा बलिरवा ? उपासताम् । | मूर्धानं दिवो अरतिं पृथिव्यां ... |
| | सजातानां मध्यमेष्ठा अहं स्यां स्वे क्षेत्रे सुविते वि राजः ॥४॥ | संजातानां मध्यमेष्ठ हम् अस्या ... सविते * * |
| शौ ७.४१.२ | आ प्रत्यञ्चं दाशुषे दाश्वंसं सरस्वन्तं पुष्टिपतिं रयीणाम् । | ... दास्स्वंत्वे ... |
| | रायस् पोषं श्रवस्युं वसानम् इह हुवेम सदनं रयीणाम् ॥५॥ | * * स्रववस्य ... |
| शौ १ ऋ खि ७.९६.१ | यस्य व्रते पशवो यन्तु सर्वे यस्य व्रतम् उपतिष्ठन्त आपः । | यस्य व्रते ... |
| | यस्य व्रते पुष्टिपतिर् निविष्टस् तं सरस्वन्तम् अवसे हुवेम ॥६॥ | ... जुहुवेम |
| ऋ ७.९६.५ | ये ते सरस्वन्न् ऊर्मयो मधुमन्तो घृतश्चुतः । | * * सदस्यन्त्य् * मधुमन्तो घृतश्चुतः |
| | तेभिर् नो ऽविता भव ॥७॥ | तेना * विता * |
| शौ ७.४०.१ | दिव्यं समुद्रं पयसं रुहन्तम् ? अपां गर्भम् ऋषभम् ओषधीनाम् । | ... ऋषभ् * |
| | अभीपतो रय्या तर्पयन्तं सरस्वन्तं रयिष्ठां सादयेह ॥८॥ | अभीप्तं रय्या तयन्ति सदस्वन्तं रहिष्ठयां * |
| शौ ७.११६.१ | इन्द्रस्य कुक्षिर् असि सोमधान आत्मा देवानाम् असि विश्वरूपः । | ... सोमधानात्मा * * * |
| | इह प्रजा जनय यास् त आसु या अन्यत्रेह तास् ते स्वधिता गृणन्तु ॥९॥ | * * जनयद् तात्स् ? या न्येत्रह * * स्वधितो * |
| शौ ७.४२.२ | श्येनस् सुपर्णो दिव्यो नृचक्षास् सह[स्र]पाच् छतयोनिर् वयोधाः । | श्यनस् * * नृचक्षाद् * * वयोधाव् |
| | स नो नि यच्छाद् वसु यत् पराभृतम् अस्माकम् अस्तु पितृषु स्वधावत् ॥१०॥ ॥का° ४॥ | * * * * वस तु प° ... ॥४॥ |
| | **२०.१०** | |
| शौ ७.४२.१ | अति धन्वान्य् अत्य् अपस् ततर्द श्येनो नृचक्षा अवसानदर्शः । | * * अतु पस् ततर्म * * वसानुदर्शः |
| | तरन् विश्वा [अ]वरा रजांसीन्द्रेण सख्या शिव आ जगाम ॥१॥ | ... शिवा * |
| | आगन् देवस् सविता सर्वादायोरु ज्योतिर् अविदामा नवभिः । | ... सर्वादाया उरु * * नवोभिः |
| | मह्यं तावम् ? अदितेर् आरुहे सर्वत्र सोमं मघमित्य् ? अत्र भद्रम् ॥२॥ | |
| शौ ७.५५.७ पै ५.१.९ ऋ [१.५०.१० | उद् वयं तम[सस् परि ज्योतिष् पश्यन्त उत्तरम् । | * * तम् इत्य् पका |
| | [देवं देवत्रा सूर्यम् अगन्म ज्योतिर् उत्तमम्] ॥३॥ | |
| | पतिर् दिवः पतिर् अग्निः पृथिव्याः पतिर् विश्वस्य भुवनस्य राजति । | * देवः ... |
| शौ २^१-२, ४^१-३ | पतिर् विश्वा ओषधीर् आ विवेश पत्नीवान् अग्निर् गुहपाय ? सोमम् ॥४॥ | ... पत्नीवाम् अग्नि * * |
| | सं क्रामतं मा जहीतं शरीरं प्राणापानौ सयुजा इह स्ताम् । | ... जहितं * * सयुजेह स्ते |
| शौ ३ | सप्तऋषिभ्यः परि दद्मह एतं त एतं स्वस्ति जरसे नयन्तु ॥५॥ | शुस° * दध्महे तत्वेतं * * * |
| | यत् त आयुर् अतिहितं पराचैर् अपानः प्राणो य उ वाते परेतः । | यन् तायुर् * * अपान् प्राणो युवते * |

| | | |
|---|---|---|
| | अग्निष् टद् आहार् निर्क्रतेर् उपस्था[त्] तद् आत्मनि पुनर् आ वेशयामि ॥६॥ | अग्निश् चद् अहार * * तम् ... |
| शौ ४³⁻², २³⁻⁴ | मा त्वा प्राणो हासीद् यस् त्वा प्रविष्टो मा त्वापानो ऽवहाय परा गात् । | ...त्वे * * * वाहि * * |
| | संरभ्य जीव शरदस् सुवर्चा [अ]ग्निष् टे गोपा अधिपा वसिष्ठः ॥७॥ | |
| शौ ७.५०.१ ऋ २.३२.४ | राकाम् अहं सुहवां सुष्टुती हुवे शृणोतु नस् सुभगा बोधतु त्मना । | ...सुष्टुती... |
| | सीव्यत्व् अपस् सूच्याछिद्यमानया ददातु वीरं शतदायम् उक्थ्यम् ॥८॥ | * अप °छिद्रमानया * * * उक्त्यम् |
| शौ २ ऋ ५ | यास् ते राके सुमतयस् सुपेशसो याभिर् ददासि दाशुषे वसूनि । | * * राकेयस् सुमतयस् * * ददाति * * |
| | ताभिर् नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥९॥ | ताभिर्नो...रराणाम् |
| ऋ ८ | या राका या सिनीवाली या गुङ्गूर् या सरस्वती । | याया * या सिनीवाल्या * * या * |
| | इन्द्राणीम् अह्व ऊतये वरुणानीं स्वस्तये ॥१०॥ | ...वरुणानीं * |
| शौ ७.४८.२ ऋ ७ | या सुबाहुस् स्वङ्गुलिस् सुषूमा बहुसूवरी । | * * सुमङ्गलिस् सुपुमा बाहुसुवरी |
| | तस्यै विश्पत्न्यै हविस् सिनीवाल्यै जुहोतन ॥११॥ | |
| शौ १ ऋ ६ | सिनीवालि पृथुष्टुके या देवानाम् असि स्वसा । | सिनीवाळि पृथुष्टुके...स्वसा |
| | जुषस्व हव्यम् आहुतं प्रजां देवि दिदिड्ढि नः ॥१२॥ | * * आहुतं * * दिदिढि * |
| शौ ३ | या विश्वत इन्द्रम् असि प्रतीची सहस्रस्तुकाभियन्ती देवी । | ...°स्तुतामभियन्ति * |
| | विष्णो× पत्नि तुभ्यं राता हवींषि पतिं देवि राधसा चोदयस्व ॥१३॥ | विष्णुस् * * राका * * देवी * * ॥५॥ |
| | ॥अनु° २॥ | ॥अनु २॥ इति विंशतिकाण्डे द्वितीयो नुवाकः ॥ |
| | **२०.११** | |
| शौ ७.७७.७ पै १६.९८.४ | उप ह्वये [सुदुघां धेनुम् एतां सुहस्तो गोधुग् उत दोहद् एनाम् ।] | ओं * ह्वय इति तिस्रः |
| | [श्रेष्ठं सवं सविता साविषन् नो ऽभीद्धो घर्मस् तद् उ षु प्र वोचम्] ॥१॥ | |
| शौ ८ पै ५ | [हिङ्कृण्वती वसुपत्नी वसूनां वत्सम् इच्छन्ती मनसाभ्य् आगात् ।] | |
| | [दुहाम् अश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय] ॥२॥ | |
| शौ ९.१०.६ पै ६ | [गौर् अमीमेद् अभि वत्सं मिषन्तं मूर्धानं हिङ्ङ् अकृणोन् मातवा उ ।] | |
| | [सृक्वाणं घर्मम् अभि वावशाना मिमाति मायुं पयते पयोभिः] ॥३॥ | |
| शौ ७.७७.११ पै १६.६९.१० | सूयवसाद् भगवती [हि भूया अथो वयं भगवन्तस् स्याम । | * * इत्य् एका |
| | [अद्धि तृणम् अघ्न्ये विश्वदानीं पिब शुद्धम् उदकम् आचरन्ती] ॥४॥ | |
| ऋ १.७२.५ | संजानाना उप सीदन्न् अभिज्ञु पत्नीवन्तो नमस्यन् नमस्यम् । | ...पत्नवन्तो * * |
| | रिरिक्वांसस् तन्वा सुन्वम् ? आपस् सखा सख्युर् निमिषि रक्षमाणा[ः] ॥५॥ | रिरिक्वांसस् * * * सखे सख्युन् * * |
| शौ २ | समिद्धो अग्निर् अश्विना तप्तो वां घर्म आ गतम् । | * अग्निम् * * वी... |
| | दुह्यन्ते नूनं वृषणेह धेनवो दस्रा मदन्ति कारवः ॥६॥ | ...दुस्रा * * |
| शौ १ | समिद्धो अग्निर् अश्विना रथी दिवस् तप्तो घर्मो दुह्यते वाम् इषे मधु । | ...रथे रिवस् तप्ते घर्मो घर्मो * * ईशे * |
| | वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारवः ॥७॥ | वयो * वा पुरतमासो * * सदेमादेषु * |
| शौ ४ | यद् उस्रियास्व् आहुतं घृतं पयो ऽयं स वाम् अश्विना भाग आ गतम् । | * अस्रियास्व्...वोम् अश्विना वांभाग * * |
| | माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिवः ॥८॥ | * * विधिरस्य सत्पतीस्... |
| शौ ५ | तप्तो वां घर्मो भक्षति स्वहोता प्र वाम् अध्वर्युश् च[र]ति पयस्वान् । | ...मक्षति स्सहोता प्र * * * * |
| | मधोर् दुग्धस्याश्विनां तनाया वीतं पातं पय[स] उस्रियायाः ॥९॥ | |
| शौ ६ | उप द्रव पयसा गोधुग् ओषम् आ घर्मे सिञ्च पय उस्रियायाः । | ...ओधुग् * घर्मं * * उस्रियायाम् |
| | वि नाकम् अख्यत् सविता वरेण्यो ऽनु द्यावापृथिवी सुप्रणीतिः ॥१०॥ ॥का° १॥ | ... ॥१॥ |
| | **२०.१२** | |
| शौ ७.७७.३ | स्वाहाकृतश् शुचिर् देवेषु घर्मो यो अश्विनोश् चमसो देवपानः । | ...अश्विनाश् * * |
| | तम् उ विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्य् आस्ना रिहन्ति ॥१॥ | * अ * * * * प्रेत्य् आस्ना * |
| शौ ७.१०२.४ | सुगा वो देवास् सदना कृणोमि य आचष्टेदं सवनं जुषाणा[ः] । | ...या चष्टेदं * * |
| | वहमाना भरमाणा दधृ ? वसुं घर्मं तम् उद् आतिष्ठतानु ॥२॥ | * * * वास्त्वं... |
| शौ ७.७१.१ | शिवा नश् शंतमा भव सुमृळीका सरस्वति । | |
| | मा ते युयोम संदृशः ॥३॥ | * * अयोमि सर्दृशः |

| | | |
|---|---|---|
| शौ ७.११५.२ | उपैनं देवो अग्रभीच् चमसेन बृहस्पतिः । | * देवा... |
| | यजमानाय सुन्वते सर्वं तं रीरधासि नः ॥४॥ | |
| शौ ७.३४.१ पै ६.१८.१, १२.[९.१७ | सं मा सिञ्चन्तु मरुतस् [सं पूषा सं बृहस्पतिः । | * * * मरुत इत्य् एका |
| | [सं मायम् अग्निस् सिञ्चतु प्रजया च धनेन च । | |
| | [दीर्घम् आयुः कृणोतु मे] ॥५॥ | |
| शौ ७.२८.१ | इळैवास्मिन्न् अनु वस्तां व्रतेन यस्याः पदे पुनते देवयन्तः । | इलीवस्ताम् * गस्तां व्रतेनि... |
| | घृतवती शक्वरी सोमपृष्ठोप यज्ञम् अस्थित वैश्वदेवी ॥६॥ | * सकरी... °देवीः |
| शौ १८.४.२८ ऋ १०.१७.११ | द्रप्सश् चस्कन्द [पृथिवीम् अनु द्याम् इमं च योनिम् अनु यश् च पूर्वः । | * * इत्य् एका |
| | [समानं योनिम् अनु संचरन्तं द्रप्सं जुहोम्य् अनु सप्त होत्राः] ॥७॥ | |
| ऋ १२ वैतानसूत्रे १६.१७ | यस् ते द्रप्स[स्] स्कन्द[ति] यस् ते अंशुर् बाहुच्युतो धिषणाया उपस्था[त्] । | यत् * * * यत् * अंशुद् * धिपणया |
| | अध्वर्योर् वा परि [वा] यः पवित्रात् तं ते जुहोमि मनसा वषट्कृतम् ॥८॥ | * * पर्युः पविश्रास् * * * * * |
| ऋ १३ वै° १७ | य[स् ते] द्रप्सः पतितो ऽवश् च यः परस् स्रुचा । | ...वृ ष्ट यः परि श्रुतः |
| | अयं देवो बृहस्पतिस् सं तं सिञ्चतु राधसे ॥९॥ | अयंन्देवों बृहस्पतिस्संन्त्व * * |
| वै° १७ | यस् ते द्रप्सः पतितः पृथिव्यां धानासोमः परीवापः करम्भः । | यंस्ते द्रप्सः पतितः पृथिव्यान्... |
| | अयं देवो बृहस्पतिस् सं तं सिञ्चतु वर्चसे ॥१०॥ ॥का° २॥ | ...त्वं * * ॥२॥ |

## २०.१३

| | | |
|---|---|---|
| शौ ३.२४.१ पै ५.३०.१ | पयस्वतीर् ओषधयः पयस्वन् मामकं वचः । | * * पयस्वान् * वच इत्य् एका |
| | [अथो पयस्वतां पय आ हरामि सहस्रशः] ॥१॥ | |
| शौ ७.५५.६ तै सं १.२.१४.४ | अयम् अग्निर् वरेण्य आयुष् टे विश्वतो दधत् । | * * वरेण्यायुष् * * * |
| | पुनस् त्वा प्राण आ यातु परा यक्ष्मं सुवामि ते ॥२॥ | * * प्राणा यातु परा यक्ष्मं * * |
| शौ ७.४६.१ | जनाद् विश्वजनीनां विशाम् उरुक्षितीनाम् । | * °जनीनां * अरुक्षतीनाम् |
| | दूरात् त्वा मन्ये नृतु ? ईर्ष्याया नाम भेषजम् ॥३॥ | दूराद्वा मन्यामन्या नृतु रुष्या * * |
| शौ ७.४७.१ | तत् संवेगस्य भेषजं तद् असुना सं गृभाहितम् ? । | |
| | अग्नेर् इव दहतो क्षवस्य दहतो यथा ॥४॥ | |
| | न जाताम् ? उत् सरिष्यामि हृद उद्वाग्निम् इव वारये ॥५॥ | * * अत् * हृदा उद्वाग्निम् * * |
| | अ ग मा न ज्मि म प यं ? मन्यन्ते हृदयाद् अधि । | |
| | अमुष्मिन्न् अस्य मायाम् आ दध्मस् तत्रैवैनां वि दध्मसि ॥६॥ | ...तत्रोवैनां * * |
| शौ ७.५८.१ | तिरश्चिराजेर् असितात् पृदाकोर् अथ संभृतम् । | तिरश्चराजेर् अंसिता प्रजाकूर् * * |
| शौ * कङ्कपर्वणो...अनीनशद् | तद् गङ्कपर्वणो विषम् इयं वीरुद् इदूषत् ? ॥७॥ | तद...वीरत् * |
| शौ २ | इयं वीरुन् मधुजाता मधुश्चुन् मधुला मधूः । | यं वीरुर् मध्वजाता मधुश्च * मधु |
| | सा विहृतस्य भेषज्य् अथो मशकजम्भनी ॥८॥ | ...अतो मषक° |
| शौ ३ | यतो दष्टं यतः प्रातं तद् अस्मान् निर् नयामसि । | * * * प्रतं ततस् सा निन् * |
| | अर्भस्य तृप्रदंशनो मशकस्यारसं विषम् ॥९॥ | अत्रसस्य त्रिप्रदंशमनो नो मयाकस्यारस * |
| शौ ४ | अयं यो वक्रो विकटो विपर्वा अह ? मुखान्य् एषाम् वृजिना कृणोषि । | * * विकरो... |
| | तानि त्वं देव सवित[र्] इषीकाम् इव सं नमः ॥१०॥ ॥का° ३॥ | ... ॥३॥ |

## २०.१४

| | | |
|---|---|---|
| शौ ६.७१.१ | यद् अन्नम् अद्मि बहुधा विरूपं हिरण्यम् अश्वम् उत गाम् अजाम् अविम् । | इद् अंन् अज्मि ...उद् * * * |
| शौ ७.५९.१ | यद् एव किं चित् प्रतिजग्रहा[हम् अ]ग्निष् टद् विश्वाद् अगदं कृणोतु ॥१॥ | |
| | यद् आशसा मे चरतो जनीं अनु याचमानस्य वदतो विचुक्षुभे । | * आसिसा...याज° विततो विचक्षुषे |
| | यन् मे तन्वो रजसि प्रविष्टं ? सरस्वती तद् आ पृणाद् घृतेन ॥२॥ | ...भात् * * |
| | यद् आरिम प्रतिगृह्णन्त्व् अ ये ता श् शि षा सि ? सन्तो नवम् अग्ने चरन्तः । | |
| | तन् नस् तस्माज् जातवेदो मुमुग्धि वैश्वानरः प्रति हव्या गृभय ॥३॥ | ...मुमुदुग्धे * * * गृभाय |
| | चक्षुषः पाशान् मनसश् च पाशाद् ईक्षायाः पाशाद् उत शक्वरीणाम् । | ...सकरीणाम् |
| | तस्मान् मुमुग्धि विश्वा[व]सो तन्वो दातॄणां दानं त्यजामहे वयम् ॥४॥ | तेस्मान् * विंश्वासोस् तन्नो * दातुं * * |
| | [ये] अदुर् मे विश्वे देवा यो ऽदात् सवितेदम् । | * म विश्व * य * * |

| | | |
|---|---|---|
| | यो ऽदान् मे ब्रह्मणस् पतिः प्रियो मित्रो अदाद् इदम् ॥५॥ | य… यहाद् * |
| | इन्द्रेण मेदिना युजाग्नि[ना] जातवेदसा । | |
| | अधरे सन्तु शत्रवः ॥६॥ | आधारे * सत्रवः |
| शौ ७.११५.१ | अग्निम् इन्द्रं वयद् ? युवं हथो वृत्राण्य् अप्रतं । | …अयो * * |
| | उग्रा हि वृत्रहन्तमा ॥७॥ | * य वृत्रहन्तुमाम् |
| | अग्निम् इ[न्द्रं] वयद् ? युवं पुरोधा इ[ह] हवामहे । | |
| | स नो मृळातीदृशे ॥८॥ | * * मृळतईदृशे |
| शौ २ | याभ्यां स्वर् इतो यन्त्य् अग्रे याव् आतस्थतुर् भुवनानि विश्वा । | * * इत यत्य्… |
| | प्रचर्षणी वृषणा वज्रबाहू अग्निम् इन्द्रं वृत्रहणा हुवाम ॥९॥ | प्रतिश्चषणी ऋषणा * * इन्द्रं * * |
| शौ ७.२६.१ | ययोर् ओजसा स्तभिता रजांसि यौ वीर्यैर् वीरतमा शचीभिः । | …यथो वीरैर् * * |
| | यौ पत्येते अप्रतीतौ सहोभिर् विष्णुम् अगन् वरुणं पूर्वहूतिः ॥१०॥ ॥का° ४॥ | या * अप्रतीतो… ॥४॥ |
| | **२०.१५** | |
| | ययोर् अप्स्यं ? महिमा नदीषु प्ररि[रि]चे प्रति विरोचनायाम् । | * * संहिमा…वी° |
| | ययोर् अस्ति नमद्भि[स् सं] भविष्ठं विष्णुम् अगन् वरुणं पूर्वहूतिः ॥१॥ | * अस्य * भविष्ठा… |
| शौ ७.२६.२ | ययोर् इदं प्रदिशि यद् विरोचते प्र चानति वि [च] चष्टे शचीभिः । | …वीरोचते * जानच… |
| | सह ऋतस्य धर्मणा युवाना विष्णुम् अगन् वरुणं पूर्वहूतिः ॥२॥ | महा * धर्मणा… |
| | उभा जिग्यथुर् न परा जयेथे न परा जिग्ये कतरश् चनैव वाम् । | * जिग्यथुन् * * जयेथो * * जग्ये… |
| | इन्द्रश् च विष्णो [यद्] अपस्पृधेथां त्रेधा सहस्रं वि तद् ऐरयेथाम् ॥३॥ | इन्द्रस्य विष्णोर् अवस्पृधेथा * * यद् अधीर यथाम् |
| | यच् चाशुद्धं यद् अनृतं यच् च चरामि पापया । | यश् छुद्धं * * यश् चरामसि * |
| शौ ७.६६.१[१-४] | आपो मा तस्माद् एनसो दुरितात् पान्तु विश्वतः ॥४॥ | * * तसद् * दुरिताद्… |
| शौ ४.१७.५ पै ५.२३.७ | दुष्वप्न्यं दुर्जीवितं [रक्षो अभ्वम् अराय्यः । | दुष्वर्भि * इत्य् एका |
| | [दुर्णाम्नीः सर्वा दुर्वाचस् सर्वं दुर्भूतं तम् इतो नाशयामसि] ॥५॥ | |
| शौ ७.६६.२ आप श्रौ ९.१७.४ | यद् अवामृक्षत कृष्णशकुनिर् मुखेन निर्ऋते तव । | * इवा° °शकुनिर्…तवा |
| | अग्निष् टत् सर्वं शुन्धतु हव्यवाद् घृतसूदना ? ॥६॥ | * टद् * शुन्धत… |
| शौ १ | यद् अस्मान् कृष्णशकुनिर् निष्पतित [आ]नशे । | यद् असात् कृष्णशकुने निष्पतता * |
| | आपो मा तस्माद् एनसो दुरितात् पान्तु विश्वतः ॥७॥ | |
| | अग्निर् मा पातु प्रथमो दुरिम्णो ? निर्ऋत्यां विश्वा दुरितानि मृज्महे । | |
| | विश्वे मा देवा मरुतः पुनन्तु वरुणो रा[जा] सविता पवित्रै[ः] ॥८॥ | |
| | अन्तरिक्षे निपतितो यातुधानो निबोधितः । | अन्तरिक्षेण पतत यातुधान निबोधतः |
| | स्तोमं यम् अभ्यजुषथास् तम् उ स्योनं कृणोमि ते ॥९॥ | * * अभ्यजुष्टतस् * अ * * * |
| | यद् वा कृष्णो अभ्यरुक्षद् देवेभ्यस् परि निर्हृतः । | |
| | शिवं ते तन्वे तत् कृण्मो वि ते पाशांश् चृतामसि ॥१०॥ ॥का° ५॥ | …कृण्वो * * * चरतामसि ॥५॥ |
| | **२०.१६** | |
| शौ ७.११८.१ | तृष्टिके तृष्टवन्दन उद् अमूं छिन्धि तृष्टिके । | त्रिष्टिके त्रिष्टिनन्दना यद्भूर् छन्ति त्रिष्टिके |
| | यथा गृहद्ध्य यद्मस्त ? अमुष्मै शेप्यावते ॥१॥ | अथा * मसै शेप्यावतः |
| शौ २ | तृष्टासि तृष्टिकासि वृषा वृषातक्य् असि । | त्रि° त्रिष्टकासि… |
| | परिवृक्ता यथासस्य् ऋषभेण वशा [यथा] ॥२॥ | प्रवृत्तेवा यथावस्त्य् अर्षभेण वशः |
| शौ ७.११९.१ | आ ते ददे वक्षणाभ्य आ ददे हृदयाद् अधि । | अ * * वक्षणाभ्यो… |
| | आ ते मुखस्य यद् वर्च आशांसा अभ्य् आ तृप्ससि ? ॥३॥ | …भ * |
| | मयि वर्चो मयि श्रवो मयि द्युम्नं मयि त्विषि[ः] । | * * * सुवो… |
| | अहं ते वर्च आ [द]दे अहं भूयास[म्] उत्तमः ॥४॥ ॥का° ६॥ ॥अनु° ३॥ | * * वर्चो दे * * * ॥६॥ इति विंशतिकाण्डे तृतीयो नुवाकः ॥ |
| | **२०.१७** | |
| शौ ६.३७.१ | अभि प्रागात् सहस्राक्षो युक्त्वा शपथो रथम् । | * * * उक्त्वा… |
| | शप्तारम् अन्विच्छन् याति वृक इवाविमतो गृहम् ॥१॥ | * अन्यशछन् * वृकेवाविमतो * |

| | | |
|---|---|---|
| शौ २ | परि णो वृङ्धि शपथ ह्रदम् अग्निर् इवा दहन् । | * * वृद्धि * ह्रदम्...दहम् |
| | शप्तारम् अत्र त्वं जहि दिव्या वृक्षम् इवाशनिः ॥२॥ | ...वक्षम् इवाशनी |
| शौ ७.६१.१ | यो नश् शपाद् अशपतश् शपतो यश् च नश् शपात् । | * * शपात शपथे शपथो... |
| | वृक्ष इव विद्युता ह[त आ] मूलाद् अनु शुष्यति ॥३॥ | वृक्षैव विद्युता... |
| शौ २.७.५ | शप्तारं यन्तु शपथा यस् सुहार्द् तेन [न]स् सह । | शपथार् * * * वाहान् देन * * |
| | जिह्वाम् उ लक्षणस्य दुर्हार्द× पृष्टीर् अपि श्टणीमसि ॥४॥ | जिह्वास्...दुर्हान्द× * अप सृणी॰। जिह्वास्... [सृणी॰ (द्विरुक्तिः) |
| | यं द्विष्मो यश् च नो द्वेष्टय् अघायुर् यश् च नश् शपात् । | |
| | समपेप्समिवावक्षासं ? तं प्रत्य् अस्यामि मृत्यवे ॥५॥ | * त्वं * गस्याप * |
| शौ ७.११९.२ | प्रेतो यन्तु व्याध्य× प्रानुध्या× प्रो अशस्तयः । | * यन्त्व् अन्याध्य× पुराणध्या× पुरायशस्ययः |
| | अग्नी रक्षस्विनीर् हन्तु सोमो हन्तु दुरस्यतीः ॥६॥ | अग्नीं रक्षस्यन् * * * दुरस्यनी |
| शौ ७.१२०.१ | प्र पतेत× पापलक्ष्मि नश्येत× प्रामुत× पत । | * पचेत...परामुत× पथः |
| | अयस्मयेनाङ्केन यं द्विष्मस् तस्मिन् त्वा सजामः ॥७॥ | ...ता सुजामः |
| शौ २ | या त्वा लक्ष्मी× पतयालूर् अजुष्टा हृदि [च]स्कन्द वन्दनेव वृक्षम् । | आ * * पतयालैलजुष्टा * * मन्दनेव वृहम् |
| | अन्यत्रास्मत् सवितस् ताम् इतो धा हिरण्यहस्तो वसु नो [र]राणः ॥८॥ | * समितत् साम् * * ॰हस्ते वस् * * |
| शौ १.१८.२ | निर् अरणिं सविता साविषत् पदोर् निर् हस्तयोर् वरुणो मित्रो अर्यमा । | * अरणीं * सविशत् पभोन्यरुन् * * * * |
| | अपादित्या अनुमती रराणा प्र णस् सुवात् सविता सौभगाय ॥९॥ | यद् आदित्यामवती * पृ णु सुवा * * |
| शौ ७.१२०.३ | एकशतं लक्ष्मीस् साकं मर्त्यस्य [या] जनुष इह जाताः । | * लक्ष्मिस् * * जंनुपेह जाता |
| | तासां पापिष्ठा उद् अत× प्र हिण्मश् शिवा [अ]स्मभ्यं जातवेदो नि यच्छ ॥१०॥ ॥का॰ १॥ | * * तद् अत... यश्छत् ॥१॥ |

## २०.१८

| | | |
|---|---|---|
| शौ १.१८.३[१-२] | यत् त आत्मन् तन्वां घोरम् अस्ति यद् वा केशेषु प्रतिचक्षणे वा । | * तारमं तन्वा * अस्ति याद् * केशपु * * |
| | तत् ते विद्वान् अप बाधय एषां ? प्र तत् सुवात् सविता सौभगाय ॥१॥ | * * विद्वीं उप वाधयेषां * त्वा सुवा * * |
| शौ १[१-२] | निर् लक्ष्म्यं ललाम्यं निर् अरातिं सुवामसि । | निन् लार्क्ष्मि ललाम्यद्दोनिर् अरातीं * |
| | अथा नो ऽस्य सीदतो रायस् पोषम् इवा सुव ॥२॥ | यथा...इहा * |
| ऋ ५.१.४ | अग्निम् अच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरन्ति । | * इच्छ देवयताद् मनांसिह चक्षूंपिव * * चरवि |
| | यद् ईं सुवाते उषसा विरूपे श्वेतो वाजी जायसे अग्रे अह्ना[म्] ॥३॥ | यदे सुवाभे * * श्रेतो * जयसे * * |
| शौ १९.५.१ ऋ ७.२७.३ | इन्द्रो राजा जगतश् चर्षणीनाम् अधि क्षमि विषुरूपं यद् अस्ति । | ...विश्वरूपं * * |
| | ततो ददाति दाशुषे वसूनि चोदद् राध उपस्तुतश् चिद् अर्वाक् ॥४॥ | ...रात्र * * अथर्वाक् |
| | शकुनिर् भूत्वापिबस् तु पिप्पलं पत्या निविष्टा यदि वाघ पत्न्या । | ...पत्यान् निवष्टथा... |
| | भीमा घोरा लक्ष्म्योस् साभव्यास् ? ता इतो हविषा निर् यजामः ॥५॥ | ...थितो * * * |
| | या ते गृहेषूत वा घने प्रजा लक्ष्मीर् या वा ते बभस्ति । | ...लक्ष्मिर्...बभस्ति |
| | तां बृहस्पतिर् हविषा जुषाणो निन्द्य् ? प्रति दध्मी ? अतिदूरम् अस्मात् ॥६॥ | ...अधिदूरम् * |
| शौ १.१८.४[१-२] | रिश्यपदीं वृषदतीं गोषेधां वशमीम् ? उत । | विष्पर्दी रिसद्वतीं घोपेदां * * |
| | यदि युध्यं यद् अयुध्यं ब्रह्मणा ता अनीनशम् ॥७॥ | * युद्ध्यं याद्धयं * * * |
| | प्रत्योषन्तीम् उत्सङ्गिनीम् उत चित्राम् उतारणीम् । | प्रत्योषन्तम् उत्सङ्गिनीम् उतश् * उतारिणी |
| | सिंहीं ज्येष्ठलक्ष्म्यं व्याघ्रीं नाशयामसि ॥८॥ | * ॰लक्ष्मं * * |
| | अनूच्यायनीं प्रतिसरां विबद्धाम् उत यंसतीम् । | अनुध्यायनीं प्रतिसारां विबाधाम् * * |
| | रोदस्य पत्यो रोदनां प्रपदसाम् अलक्ष्म्यम् ॥९॥ | * पत्न्यो * * अलक्ष्म्या |
| | वामसुवां पितृषन्तीय ? एषन्तीं तपनीम् उत । | ...एपन्ती * * |
| | असद्यन् ? तीव्रध्वंसिनीम् अस्त्रां वदन्तीं लक्ष्मीं ब्रह्मणा ताम् अनीनशम् ॥१०॥ ॥का॰ २॥ | * * मष्ट्रा वदन्त लक्ष्मिम् ... ॥२॥ |

## २०.१९

| | | |
|---|---|---|
| | आमन्त्र्यां वचस्यां संपिबन्तीं शकरीम् । | आमन्त्रियां * संपिबन्ती शाककरीम् |
| | ¿ उत् तां जनं समां प्रपाधमाम् अलक्ष्मीम् ? ॥१॥ | |
| | या ते घोरा तन्वाम् आविवेश या[स्] ते लक्ष्मीस् सर्वा[स्] समक्ताः । | |
| | अग्निष् टे ताश् चरति सौभगायापश् शुम्भन्तु बृहस्पते रणाय ॥२॥ | |
| | अदेवघ्नीं वरुणापतिघ्नीं बृहस्पत [इ]न्द्रापुत्रघ्नीं लक्ष्मीं ता [अ]स्यै सवितस् सुव ॥३॥ | * ॰पितिघ्नीं बृहस्पती * लक्ष्मी * स्त्यै |

| | | |
|---|---|---|
| | या त्वा लक्ष्मी[श् चा]क्षुषी या चास्तु या हस्तयो[स्] स्तनयोर् योपपक्षयोः। | आ * * * यो तदस्तु...यूपपक्षयोः |
| | श्रोण्योर् भंससि यापि दंष्ट्रे सर्वास् त्वाति क्राम[न्] घोरा[ः] ॥४॥ | |
| शौ २.३३.५ | ऊरुभ्यां ते ऽष्ठीवद्भ्यां पार्ष्णिभ्याम् प्रपदाभ्याम्। | * द्वेष्ठिवद्भ्यां... |
| | यक्ष्मं श्रोणिभ्याम् अङ्गेभ्यो याः पापीस् ता [अ]नीनशम् ॥५॥ | यक्ष्मी... |
| | ¿ अपश् शीलं पितृषन्ति अपा? ॥६॥ | |

अधिपाठः

पै २०.१७.९[१]–२०.१९.६

निर् हस्तयोन् वरुणो मित्रो अर्यमा। अपादित्यानुमती रराणा प्राबाधयेषां प्र त्वा सुवा सविता सौभगाय। निन् लक्ष्मिं ललाम्य हं निर् अवर्बी स्रवामसि। यथा नो स्य सीदतौ रायस् पोषम् इहा सुव। अग्निम् इच्छ देसयतांत्मनां सिंहचक्षूंषि व सूर्यं सञ्चरति। यदी सुवदो उशसा विरूपं श्रेतो वाजी जायसे अग्रे अह्ना। इन्द्रो राजा जगतश् चर्षणीनाम् अधि क्षसि विषूरूपं यद् अस्ति। ततो ददति दाशुषे वसूनि। चोदन्नाता उपस्तुतश् चिद् अर्वाक्। शकुनिर् भूत्वा पिवस् तु पिप्पलं पत्याञ्जिवष्टया यदि वाघ पत्न्या। भीमा घोरा लक्ष्म्योस् साभव्यास् ताय् इतो हविषा निर् यजामः। या ते गृहेपूत वा धने प्रजा लक्ष्मिर् या व ती वभस्ति। तां बृहस्पतिर् हविपा जुषाणो निर्ध्वं प्रति दध्मां अधिदूरम् असत्। निश्पतीं विशद्वर्ती घोपेदां वशमीम् उत। थदि युद्धयं याद्धयं ब्रह्मणा ता अनीनशम्। प्रत्योषंतम् उत्सङ्गिनीम् उतश् चिन्नास् उतारिणी। सिंही ज्येष्ठलक्ष्मीं व्याघ्रीं नाशयामसि। अनुध्यायनीं प्रतिसारां विबाधाम् उत यंस × × × रोदस्य पत्न्यो रोदनां प्रपादा सामलक्ष्म्या। वामसुवां पिनृषन्तीय एषन्ती तपनीम् उत। असद्यन्तींव्र ध्वंसिनीं भष्ट्रा वदान्त लक्ष्मिम् सम्पिबन्ती शाकरीम् उत्तरां जनं समां प्रपादमास लाक्ष्मास्। ब्राह्मणा ता अनीनशाम् ॥२॥ आमन्त्रियं विचस्यां सम्पिबन्ती श्याकरीम् उत्तरां जनं समां प्रपाद लक्ष्मास्। या ते घोरा तन्वाम् आविवेश या ते लक्ष्मीस् सर्वा समक्ताः। अग्निष् टे तश् चरति सौभगायापश् शुम्भन्तु बृहते रणाय। अदेवाघ्नीं वरुणापितिघ्नीं बृहस्पते इन्द्रापुत्रघ्नीं लक्ष्मी चक्षुषी यो तद् अस्तु या हस्तयो स्तनयो यूपपक्षयोः यो न्यूर् भंससि यापिर् अंष्टे सर्वास् त्वाति क्राम घोरा। ऊरुभ्यां द्वेष्टिवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम्। लक्ष्मी श्रोणिभ्याम् अङ्गेभ्यो यः पापीस् तानीनशम्। अपाश् शीलं पितृषन्ति अपान्

पै २.१७.९[१-४]

निर्हस्तयोन् वरुणो मित्रो अर्यमा। अपादित्यानुमती रराणा प्र णस् सुवा सविता सौभगाय।

| | | |
|---|---|---|
| शौ ७.१२०.४ | एता एना व्याकरं खिले गर्दभीर् इव। | * एगण्यकरं * * * |
| | रमन्तां रुद्रिया लक्ष्मीर् याः पापीस् ता [अ]नीनशम् ॥७॥ | * रुद्रया लक्ष्म्योर् * * त * |
| | सायुषी नाम वा [अ]सि सह्यमाना सहस्वती। | ...सह्यमानां सहस्वतीम् |
| | गृहकपोतिम् अनुवर्तिनीं कुलायिनीं ता इहा वेशयामसि ॥८॥ | गृहकपतिं... । ओं ता इहा वेशयामसि |
| | सं चार्णवैर् या बभूवान्या जिन्वतु भद्रपापे। | ओं * जार्णैमर् * बभूवान्यान्या * * |
| | तां लक्ष्मीं वीह वाचयापो? भद्रां सुभद्राम् अपि सौभगाय ॥९॥ | तिं * विह * भद्रा * * * |
| | एकशतं लक्ष्मीस् [साकं] तासां राज्ञी बभूविथ। | * लक्ष्मिस् * राज्ञीर् बभूयथा |
| | भद्राभिर् भद्रे संभूय भद्रेणाभि सजस्व नः ॥१०॥ ॥का° ३॥ | ...सजस्ति * ॥३॥ |

## २०.२०

| | | |
|---|---|---|
| शौ १९.३.१[१-२] | दिवस् पृथिव्याः पर्य् अन्तरिक्षाद् वाता[द्] पशुभ्यो अध्य् ओषधीभ्यः। | ...अध्य् * |
| | [यातो ल]क्ष्मीर् व्रजना संबभूव सा ब्रह्मणा प्रच्युता दूरम् एतु ॥१॥ | × × × * मजनस् * सा... |
| | वालदुच्छस्य गन्धेन हिरण्यवर्चसेन च। | |
| | आ तु पुष्करिण्या यो गन्धो भगो [मा तेन जिन्वतु] ॥२॥ | ...गन्ध तगो × × × × × × |
| | [यद् इ]न्द्रो अग्रे असुरान् जघान ततो लक्ष्मीर् नि दधुर् मर्त्येषु। | × × * * असुरां जिघान * लक्ष्मीन्... |
| शौ ७.१२०.३[३-४] | तासां पापिष्ठा निर् इतः प्र हिण्मश् शिवा अस्यै जातवेदो नि यच्छ ॥३॥ | * * नुदतु प्रतिग्मा शिवास्ये * * * |
| | या त्वा लक्ष्मीर् देवरघ्नी या पतिघ्नी गृहेभ्यस् त्वा नुदते यान्याद्य। | आ * * देवरघ्नीर् * पदघ्नी... |
| | ततस् तु मुञ्चामो मेनिम् आ नोत्तरे? सत्तोत्यास् सप्त साकम् ॥४॥ | * * मुच्यमो मेनम् * * सात्तो° * * |
| | अप्योषन्तीं वदन्तीं संपिबन्तीं शाकरीम्। | अपियोषन्तीर् ... शाकरीम् |
| | प्रभङ्ग भ्रूणघ्नीं लक्ष्मीं ता [अ]स्यै सवितस् सुव ॥५॥ | * °घ्नी लक्ष्मी * * सवितुस् सुवः |
| | शतदंष्ट्रां सहस्रां जयन्तीम् अपराजिताम्। | शतोदंष्ट्र... |

| | | |
|---|---|---|
| | लक्ष्मीर् याः पुण्याः कल्याणीर् अस्यै तास् सवितस् सुव ॥६॥ | ...कल्याणीम् * ता सवितुस् सुवः |
| | अलक्ष्मीस् सम् अलिप्सत सम् अलिप्सत लक्ष्म्यः । | लक्ष्मिस् * अलिप्सतुस् * °तु लक्ष्म्या |
| | अजैषुर् भद्रा लक्ष्मीः परा पापीर् अनीनशम् ॥७॥ | अजीपुर् * लक्ष्मिः... |
| | लक्ष्मीणां लक्ष्मीणाम् अधिपासि । | लक्ष्मीनांत... |
| | तास् ते ऽहं शुद्धो गोप्स्यामि देवजा हि बभूविथ ॥८॥ | तान् ताहं * धौप्सामि देवज * बभूयथा |
| | सभा च मा समितिश् चावतां प्रजापतेर् दुहितरः प्रचेतसा । | * * सा सवितुश्... |
| | येन वदाम्य् उप मा स शिक्षाद् अन्तर् वदामि हृदये जनानाम् ॥९॥ | * वदां * * स्य सिक्षान्तर् * * * |
| | सभा सेना समितिश् चावतां प्रजापतेर् दुहितरः प्रचेतसा । | * * समितुस् त्वावतां * दुहितराः * |
| | येन [वदाम्य् उप मां] स तिष्ठा[द् अ]न्तर् वदामि हृदये जनानाम् ॥१०॥ ॥का° ४॥ | * × × × × × स्य * * वदापि * * ॥४॥ |
| | **२०.२१** | |
| | मां [वदन्तु मानु सर्वे] वदन्तु नां प्राणन्तु मानु प्राणन्तु सर्वे । | * × × × × × × × * मा * मनु * * |
| | मां विशन्तु मानु सर्वे वि[शन्तु मानु सर्वे] एकव्रता भवन्तु ॥१॥ | * * मनु * * × × × × × × एकव्रतो * |
| | सूर्यो मा चक्षुषः पातु बृहस्पतिर् वाचस् सोमो [राजः सभा]याः । | ...पान्तु * वाचास् * × × × × य |
| | ऐन्द्रोवोन् ? इशो भवामि ॥२॥ | * द्रिशे * |
| शौ ७.१३.२ | वेद वै ते सभे नाम सुभद्रासि सरस्व[ति] । | ...नास सुभद्रासि * × |
| | [अथो] ये ते सभासदस् ते मे सन्तु सुवाचसः ॥३॥ | × × * ते सभासधस्थे * * * |
| शौ १९.८.६ | इमा या ब्रह्मणस् पते विषूचीर् वात ईरते । | ...विपूचेर् वाच ईयते |
| | सध्रीचीर् इन्द्र ताः कृत्वा मह्यं शिवतमाः कृधि ॥४॥ | ...शिवतमः * |
| | अहम् एषां ह[स्तिर्] असम् अहं भूयासम् उत्तमः । | ...उत्तमम |
| | इन्द्रो जोगायथाम् इव उत्तमं वोत्तमद् धृद्रम् ? ॥५॥ | |
| | --- आ हि बभूविथ । | ...बभूयथा |
| | यं त्वा भुरण्य यच्छथ ? सं जीव शरदश् शतम् ॥६॥ | थां... |
| | अभिभूर् अहम् आगमम् अहं भूयासम् उत्तमः । | * * गमम्... |
| | इदं प्रतिप्रवादिनं द्विषन्तम् अव धून्वे ॥७॥ | ...अवि * |
| | वरिष्ठो [वस्तिर् भवति समुद्रस्य बिलं] यथा । | उरिष्ठ × × × × × × × × × × × * |
| | पुरोदकम् इव सिच्य तन् मूत्रं तन्वस् परि ॥८॥ | ... ता मूत्रन् तन्वं * |
| ऋ ५.७८.८[१-२], ७[३-४] | यथा वातो यथा दर्घं ? यथा समुद्र एजति । | ...समुद्रो यजन्त |
| | एवा ते गर्भ एजतु निर् ऐतु दशमास्यो बहिर् जरायुणा सह ॥९॥ | |
| शौ १९.१४.१ | इदम् उच्छ्रेयो ऽवसानम् आगां शिवे ते द्यावापृथिवी [अ]भूताम् । | यदम् इश्रेया * आघां * * द्यावापृय * |
| | असपत्नाः प्रदिशो मे भवन्तु न वै त्वा द्विष्मो ऽभयं नो ऽस्तु ॥१०॥ ॥का° ५॥ | * * * * मयि * यक्ष्मो * * * ॥५॥ |
| | **२०.२२** | |
| | वास्तोष् पत इह नश् शर्म यच्छ भद्रा गच्छेतो ऽभि नो नेषस्व । | वास्तुप्... गश्छेथो * * नेपवस्व |
| | अरिष्टा वीरा इह मे भवन्तु द्विपदश् चतुष्पान् मे अस्तु पुष्टम् ॥१॥ | ...द्विपदाश् * म यस्तु पुष्टम् |
| कौशिकसूत्रे ४३.१३ ऋ ७.५५.१ | अनमीवो वास्तोष् पते विश्वा रूपाण्य् आविशन् । | * वास्तुप्... आविशम् |
| | सखा सुशेव एधि नः ॥२॥ | * सशेवु * * |
| शौ ३.१२.६ | ऋतेन स्थूणा [अ]धि रोह वंशो[ग्रो] विराजो ऽप वृङ्क्ष्व शत्रून् । | * स्थाणा... वृक्ष शतन् |
| | मा ते रिषन्न् उपसत्तारो ऽत्र विराजन् जीवाम शरदश् शतानि ॥३॥ | * ते रिपंन् उपमत्तारो * विराजां जीवां * * |
| | अपोहतं पक्षासृतं वसानौ दम्पत्योः कृणुतं दीर्घम् आयुः । | आपोहतं पक्षामसृतं वसानो... |
| | तत्र नारी पुत्रिणी जीवपत्नी[दं कुला]यम् उप संविशाति ॥४॥ | * * * * × × × * * संविशास्ति |
| | अग्निर् मा विश्वाद् दुरिता[त्] पुनातु मातरिश्वा प[वमानः पुरस्ता]त् । | ... × × × × |
| | सोमो मा पातु सविता बृहस्पतिर् वायुश् च मापस् सवी[राः प्रणीताः] ॥५॥ | ...सवि × × × × म् |
| | त्वया सत्यं वि जायते तव सत्यं विवाचनम् । | त्वय * * जायन्ते... |
| | अग्ने वृक्षस्य [जाय]स इमं जनय पौरुषम् ॥६॥ | * * × × ... |
| | वृक्षस्य शतशाखस्य मा कृन्त ? ऽस्याव[कृन्त नः] । | ... × × × |
| | वैभीतकस्य यत् फलं तेन त्वोन् मदयामसि ॥७॥ | वैभीनकस्य... |
| | पूर्वं वातात् प्र पततं पूर्वं पततम् अश्विभ्याम् । | पूर्वं * * पतत्... |
| | कृणोम्य् अमणी ? अहम् उग्रो वाग्मिम् अवीवरे ॥८॥ | ...उग्र * * |

| | | |
|---|---|---|
| | मा य[क्ष्मा] मह्यम् इहा मा रिहन्ता वि गातु ? नः । | * × मिहा मिहा ... |
| | सत्वतम् ? अस्मभ्यं घत्ते युष्माकं न[यति] किल्बिषम् ॥९॥ | ... × × * |
| | इह वर्च इह पय इह चक्षुर् उप ह्वये । | * * इहा ... चक्षार् * * |
| | इहेन्द्रियम् × × × × ॥१०॥ ॥का° ६॥ | इह इन्द्रियं - - - - - - (एवं कोशे) ॥५॥ |
| | **२०.२३** | |
| | आयुर् इह पपतामि ? संवत्सराय । | ... संवत्मनायम् |
| | अपकामस्य श्वे ? वत्सो देवीर् इव म आ ददे ॥१॥ | ... देविर् * मा * |
| | एष त्वाभि विदुर् विदन् नि ते वंस्येव् ? आ मंस्व ॥२॥ | * त्वोभि विदुन् विदुन् नि त * * * |
| | एष ते वेदस् संवननस् संवननस् स वेदस् ते ॥३॥ | * * वेद * * * वेद * |
| | एष ते अग्ने वत्स तं वाञ्छस् तं सत्यम् अग्निं ब्रूमः ॥४॥ | ... त्वं वान्दछ; तां सत्यो * * |
| | या सरस्वती गोवलिनी सा वाम् एनां का सा स्येत्य स्य ? । | यास् ... [समाप्तः॥ |
| | इमां गां वानयतु स्वाहा ॥५॥ ॥का° ७॥ ॥अनु° ४॥ | ... ॥६॥ इति विंशतिकाण्डे चतुर्थो नुवाकस् |
| | **२०.२४** | |
| | दूराद् भेषजम् आहृतं बह्वन्य् अतियोजना । | ... बहुन्य् अतियोजनाम् |
| | अपश्यम् अस्यन्तं रुद्रम् अदुष्टं दुष्कृतं करत् ॥१॥ | ... अदुष्टो * * |
| | भिनद्मि ते परावतो विश्वस्य शेप्याम् इव । | भिनदि * * * श्येप्याम् * |
| | वृषेदशो ? यथा मयि कृष्णो वृ षा ण वा ङ्मि व ? ॥२॥ | |
| | सर्वा गाव[स्] समनस[स्] सत्सवयस् ? सनाभयः । | |
| | समानां बिभ्रतीर् नावं वत्सान् उज् जिहताम् इव ॥३॥ | समानं * * वत्सां * जीहताम् इतः |
| | इन्द्रस् त्वाग्रे वानयत् सविता त्वा ततो ऽपरः । | ... त्व तता परः |
| | तृतीयम् अश्विना त्वाग्रे वंसतः ॥४॥ | ... वान्दछः [कोशे) ×पतिकाम्यस् |
| | आ ते नयतु सविता नयतु बृहस्पति× प्रतिकाम्यः । | * * * * आ नएतु बृहस्पति - - - - (एवं |
| शौ २.३६.८ | त्वम् अस्यै धेह्य् ओषधे ॥५॥ | तम् अस्मै ... |
| शौ १९.१५.२ पै ३.३५.२ | इन्द्रं वयम् अनूराधं [हवामहे अनु राध्यास्म द्विपदा चतुष्पदा । | * * न्यनुराधम् एत्य् एका |
| | [मा नस् सेना अररुषीर् उप गुर् विषूचीर् इन्द्र द्रुहो वि नाशय] ॥६॥ | |
| शौ १०.४.६[१.२] | भग प्रेहि प्रथमो ऽनु त्वा वयम् एमसि । | * * * न ... |
| | इन्द्राग्नी ब्रह्मणा स्सा ? स्वस्ति नयतां पथा ॥७॥ | |
| | अदिति× प्रैतु प्रथमा बृहस्पति× पुरएता ते अस्तु । | - प्रहितु× ... |
| | इन्द्र उभयान् विश्वत[श्] शूद्रांश् चनार्यांश् च ॥८॥ | न्द्रो मय * * चनायांश् * |
| | अमी येन संयुक्ता उष्टारा उत विल्वा ? । | |
| | त्वां हि सम् अग्रभं पदा स मा हिंसास् स मा मुह्याः ॥९॥ | त्वं ... यद् * म हिन्मां स म मुच्यः |
| | अनुमध्यमा× प्रोक्ता गर्दभा इव तुर्यजाः । | अन° प्रोक्त * * तुर्यंजः |
| | अधा सह सम्रमाया ? मयीदं स्थापयामसि ॥१०॥ ॥का° १॥ | ... स्थापपयायामसि ॥१॥ |
| | **२०.२५** | |
| | सं मा भगेन द्विगुणेन वर्चसा सं मा पृथिव्या सं मौषधीभिः । | * स्मा ... स्म पृथिव्यास् सम ओषधीभिः |
| | सं मापो मयोभुवो भगेन वर्चसा सृजन् ॥१॥ | * * मयोभू * * सजम् |
| पै १९.२४.१४ | वर्चो मा मित्रावरुणा [वर्चो यजमाने यच्च च यज्ञे ऽध्य् आहितम् । | * * °वरुण इत्य् एका |
| | [सुरायां बभ्रु यद् वर्चस् तस्य भक्षीय वर्चसः] ॥२॥ | |
| कौथुमे १.३६९ | ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते । | |
| | वि ते सदसि राजतो यज्ञं देवेषु यच्छताम् ॥३॥ | * * सरसि ... |
| | अङ्गमङ्गं सं तनोमि चक्षु× प्राणम् अथो बलम् । | * स तुनोमि ... |
| शौ ७.६३.१[३.४] | प्रियाश् श्रुतस्य भूयास्मायुष्मन्तस् सुमेधसः ॥४॥ | प्रिया सुतस्य ... |
| | तन् नो देव सवितर् जगद्धात्री च रक्षतम् । | * * देवस् सवितुर् * * रक्षतिम् |
| | पूषैनत् पुनर् आजत्व् अविलिष्टं महिव्रतम् ॥५॥ | ... अविलिष्टे * |
| | यावन्त्य् अस्य पलितानि साकं जज्ञिरे अग्रशः । | यावन्त् ... |
| | तेभ्य× प्र ब्रवीमि त्वा कृष्णा× केशा भवन्तु मे ॥६॥ | |
| | कृष्णान् केशान् सिनीवाली कृष्णान् केशान् सरस्वती । | कृष्ण× केशार् सिनीवालि कृष्णा× * °ति |

| | | |
|---|---|---|
| | कृष्णान् मे अश्विना केशान् कृणुतं पुष्करस्रजा ॥७॥ | ...पुष्करस्रजः |
| | अदो यद् अग्ने देवानां मनसा सवितादधत् । | * * अग्ने... |
| | तन् मे ऽब्रवीत् त्वष्टा विलिष्टभेषजम् ॥८॥ | |
| | विश्वधाया असि विश्वभेषज्य् आकृता । | विश्वधाय सी * आकृकृतम् |
| | अधा मेतिमेति ? निष्कृतिर् नाम वा [अ]सि ॥९॥ | |
| | वि ते चृतामि तगरीं वि योनिं वि गवीन्यौ । | ...तगरिं श्योनि * गवेन्यो |
| | वि मातरं च पुत्रं च वि गर्भं च जरायुजम् ॥१०॥ ॥का॰ २॥ | ...जरायुजः ॥२॥ |

२०.२६

| | | |
|---|---|---|
| | त्र्यङ्गो गर्भो भवतु हृदयेष्ठं जरायुजम् । | त्रियङ्गु * * हृदयष्ठं जरायुजा |
| | अदो ऽयम् अग्निम् आ दोह आराद् गच्छेव सदनम् ॥१॥ | * * * * दोहार गदछेव सादनम् |
| पै २०.२५.१० | सं ते चृतामि तगरीं सं योनिं सं गवीन्यौ । | * * नृचामि तगयं * योन्यं * गवेन्यो |
| | सं मातरं च पुत्रं च सं गर्भं च जरायुजम् ॥२॥ | स * * * * स * * जरायुजः |
| | अन्नं ते गर्भो भवतु नूषो ? जरायुजे । | |
| | एवा त्वं पुत्रं विन्दस्व यथा जीवासि भद्रया ॥३॥ | यवा...जीवाशि * |
| | [यः] प्रवृष्टे गर्भे मन्दो यो वियोनिस् सं सृज । | ... मन्द य व्योनस सं * |
| | निर् एतु दशमास्यो गर्भो भुवा [अ]न्यो हृदि ॥४॥ | नि वेतु... |
| | विष्कम्भेण वि ष्कम्भाय ता विश्वञ्चौ व्य् आ कुरु । | * * * त... |
| | एष वाम् अग्निर् अन्तरा स विश्वञ्चौ व्य् अस्यतु ॥५॥ | ...विश्वंचो * * [वाम् |
| | विष्कम्भो वि ष्कम्भायतु मनश् च हृदयं च वाम् । | * * ष्कम्भायत * * हृदयत मनश् च हृदयञ्च |
| | आ वर्तय नि वर्तय शश्वतीभ्यस् समाभ्यः ॥६॥ | |
| शौ १०.५.२३[१-२] | समुद्रं त्वा प्र हिणोमि स्वां योनिम् अपीहि । | |
| | अविभ्रस्तन्ना ? भूयासं मा परा सेचि मत् पयः ॥७॥ | ...सेति मा पया |
| वैतानसूत्रे १२.९ | यद् अत्रापि रसस्य मे परा पपातास्मृतम् । | ...म * पिपातासतम् |
| | तद् इहोप ह्वयामहे तन् म आ प्यायतां पुनः ॥८॥ | तिल योप * * माप्यायतां पुर्वः |
| | कविर् अग्ने प्र विलेपु धर्ता केशी अजीजनत् । | ...विलेप * केशा अजीनयत् |
| | इहैव विश्वतोमुखो धाता त्वष्टा त्वचि केशान् अचीक्लृपत् ॥९॥ | * °मुख * त्वाष्टा * केशां अचीक्ल्यपत् |
| शौ ७.७०.१[१-२] | सरस्वति व्रतेषु ते दिव्येषु च वदामसि । | * * त... |
| | मन्द्रे हिरण्यवर्तने प्र ण आयूंषि तारिषम् ॥१०॥ ॥का॰ ३॥ | * °वर्तन...॥३॥ |

२०.२७

| | | |
|---|---|---|
| तै ब्रा २.५.८.६ | यद् अप्सु ते सरस्वति गोष्व् अश्वेषु यन् मधु । | ...सरस्वती... |
| | तेन नो वाजिनीवति मुखम् अङ्ग्धि सरस्वति वर्चसा ॥१॥ | ...मुख संधि * * |
| शौ १३.१.५८ | यो ऽद्य देव सूर्य त्वां च मां चान्तरायति । | * भ्य...त्वा * * चात्वंरायति |
| | अस्मिन् दुष्वप्न्यं सर्वं दुरितानि च मृज्महे ॥२॥ | यस्मिन् ... |
| शौ ५७[१-२] | यो नो ऽभिच्छायम् अत्यत्य् अग्निं तिष्ठत्य् अन्तरा । | * * मृश्छायम् मात्यवेष्व् अग्नि * * |
| | तं मृत्यवे प्रेष्यामि शरो वास्यत्व् एषाणाः ॥३॥ | * * प्रश्छामि शर द्वस्यात्व् येपाणा |
| | भिन्त्व् एनं दैव्या इषवो ब्रह्माणो भिन्तु मेन्याः । | धिनन्त्व् ऐनं देव * * भ्रतु मेन्याम् |
| | यो ऽस्माकं प्रजापते ऽग्निं तिष्ठत्य् अन्तरा ॥४॥ | ...ग्नि तिष्ठस्य् * |
| | प्रजापते यो ऽस्मां आ ह शा ग्निं ? तिष्ठत्य् अन्तरा । | प्रजापतये... |
| शौ ५६[३-४] | तस्य वृश्चामि ते मूलं [न] छायां करवो ऽपरम् ॥५॥ | तस्या वश्चामि * मूल श्छाया * पनम् |
| | प्र सुवैनान् देव वज्रेभ्यो मृत्यु वि भ्रुम् ? आ द्यामसि । | * सुवेनं...भ तामसि |
| शौ ३.६.५[१-२] | सिनात्व् एनान् निर्ऋतिर् मृत्योः पाशैर् बन्धैर् अविमोक्यैः ॥६॥ | * ऐनान् * * पाशे बन्धैर् अपि सोक्यै |
| | सुमङ्गलेन वचसा केशिन् ग्रामं त्वं वद । | * वचस केशि ग्राम त्वा वद |
| शौ ६.२९.३ | ब्रह्माब्रह्मा तुव ? [उ]लूकाच्छा वदामसि ॥७॥ | |
| | पराङ् एव परावतं पराचीम् अनु संवतम् । | * एह * * * संयतम् [हि चाकशम् |
| | सुधा ? यमस्य त्वा गृहे ऽरसं प्रतिचाकशान् निरस्तं प्रतिचाकशान् ॥८॥ | * यसस्य * * * प्रतिहि चरसं निहिस्तं प्रति |
| | शग्मम् उलूक नो वद यं द्विष्मस् तम् इतो नय । | शगम् ऊलुकि... |
| | राज्ञो यमस्य त्वा गृह एह मूषकवेह ? भागः ॥९॥ | ...गृहे हेह... |
| | आ वद बहुलं गोष्ठं धीति ? वत्सम् अनुष्ठुगम् । | या * बबहुलं गोष्ठ... |
| | ध्वाङ्क्षाय द्विपदां वद शुने चतुष्पदां वद ॥१०॥ ॥का॰ ४॥ | ध्वाङ्क्ष्याय... ॥४॥ |

## २०.२८

| | | |
|---|---|---|
| | पुनर् मे राजा वरुण× पुनर् इन्द्र× पुनर् भगः । | |
| | पुनर् मे विश्वे देवा आयुर् जीवातव आधुः ॥१॥ | * * * * * जीवतवाद |
| | उत् तिष्ठात× प्र द्रवार्वाङ् मात् प्र तिष्ठा वि चाकशः । | ...द्रर्वांवी सात् * * व्य * |
| | सपत्न्या वर्च [आ]दायाहं भूयासम् उत्तमः ॥२॥ | |
| कौशिकसूत्रे ११६.७[१-२] | उत् तिष्ठत निर् द्रवत न व इहास्तु न्यञ्चनम् । | ...ह्रास्त्व * |
| | अमुष्य वित्तम् अपिबत् सा म स्त द् नु ह्वि प प तं स्व त नू ह्वि न स्वः ? ॥३॥ | अमूष्य... |
| | ये ऽस्माकं सबन्धवो विष्ठिता× पृथिवीम् अनु । | यो * संबन्धवो विष्ठितः * * |
| | तेषाम् इन्द्र इव देवानाम् अहं भूयासम् उत्तमः ॥४॥ | * इन्द्रीव * * * * |
| | ये ऽग्नय× पार्थिवा [आ]हिता[×] पृथिवीम् अनु । | आ म्रयः * * * * |
| | तेषाम् असि त्वं सङ्गते स नो जीवातवे कृधि ॥५॥ | |
| | चितस् स्थ परिचितस् स्थाग्नय[स्] स्थ निह्वा नाम । | चित्त * परिचित्त * स्त * * |
| | ते नो मा नि[ह्व]वान् वध्यान् तेभ्यो वो नवोनवो ऽहं वचीमि ? । | * * * निव वध्वन् ... |
| | यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस् सो ऽव वो ह्वम् एतु ॥६॥ | ...स * * * इंतु |
| | इन्द्राग्नी पुनर् आकूतिं नयत स्थिरवीराव् अपराव् एतो गावौ ? । | * * आकूतं ... इंत गौ |
| | अस्माकं सर्वा विह्वे सन्त्व् एता वयं विद्याम गुह्यं नाम गवाम् ॥७॥ | ...विम्याम गुह्यन् * * |
| | प्रजापतेर् अनु क्रन्दय विश्वे देवा× पद्वायास् सन्त्व् आसाम् । | ...आसम् |
| | त आदित्या अनु गच्छन्ति शूरा इन्द्रज्येष्ठा× पुनर् आ वर्तयन्तु ॥८॥ | |
| | इन्द्र प्रणेतर् वर्धय माम् अश्ववान् वहतु मां स्वश्वः । | * प्रणेतुर्...स्यश्वा ? |
| | ऐन्द्राग्नं वर्म प्रतिमुञ्चमान उभयेभ्यश् चारु समितिम् आ वदानि ॥९॥ | ऐन्द्राग्नि * °मानो योभयेभ्यश् * समितुम् * * |
| | चारुवाक् चारुवदनश् चारुसङ्काशी नो नृभिः । | चार्वाक् चार्वदनश् चारुसङ्काशि * * |
| | यो द्वेष्य× प्रतीकाशो जिगीवाँ अपराजितः ॥१०॥ ॥का° ५॥ | य द्वेष्याः * जिगिवां * ॥५॥ |

## २०.२९

| | | |
|---|---|---|
| शौ ७.९५.१ | अपि वृश्च पुराणवद् व्रततेर् इव गुष्पितम् । | * * पुरणवद्... |
| | ओजो दासस्य जम्भयम् ॥१॥ | |
| शौ २ | यद् एतद् एतु संभृतं मरुतर् ? इन्द्रस्य वि भजावहि । | ...भजावही. |
| | म्लापयां शिश्नं ते शुक्र वरुणस्य व्रतेन च ॥२॥ | म्लापया विश्न ति * * * त |
| शौ ३ | यथा शेपो यगु ? स्त्रीषु चासन्नासहः । | * शेपो * स्त्रीष जासुन्नामया |
| | अवस्थस्य क्नदीवतो भङ्गुरस्य नितोदिनः । | अवसश्च क्नवजीवतु भङ्गुरश् शम् श्तो दिवः |
| | यद् आततम् अव तत् तनु यद् उत्ततम् अव तत् तनु ॥३॥ | * आत्तम् इव तत्तनु दात् तनूम् इव तत्तनू |
| | अमूं म्लापयन् ते तन्वं क्लीबं ते वीरुधाकरम् । | अमुं म्लपन्...क्लीवन् * * |
| | अन्तष्कोश इव कोशेभ्यस् स्त्रीष्व् अप्य् आक्तश् च नः ॥४॥ | न्तष्कोशेव... |
| | आ नो मेदिं गृहपतिर् दधात्व् इन्द्रेण मेदिना । | * * मदं * * इन्द्रियोण * |
| | आ नो मेदिं सरस्वत्य् आ नो वहन्तु सिन्धवः ॥५॥ | * * मेधा... |
| | मेदिं धाता मेदिं पूषा मेदिम् इन्द्रो दधातु मे । | |
| | मेदिं मे अश्विनोभा धत्तां पुष्करस्रजा ॥६॥ | ...धात्तां पुष्करस्रजः |
| | ऊरू मेदिं मेदिं बाहू अष्ठीवन्ता उरश् च मे । | * मे दमे दमे बाहु * उरस्य मे |
| | अपां पर्यस्य मौदिले ? मेदिम् इन्द्रो दधातु मे ॥७॥ | |
| | चर्मणीवोपनीतस्य सर्वान् कामान् वृहासि ते । | [नुवाकः ॥ |
| | अयस्पात्रं विमत ? शिरो यथासत् समरं समम् ॥८॥ ॥का° ६॥ ॥अनु° ५॥ | अयस्पात्र... ॥६॥ इति विंशतिकाण्डे पञ्चमो |

## २०.३०

| | | |
|---|---|---|
| शौ ७.११२.१ | दिवि ता नां उ त ? दशं सप्त सूर्यस्य रश्मयः । | |
| | धारास् समुद्रिया [आ]पस् तास् ते शल्यम् उच्च् चिच्युवुः ॥१॥ | धरात् ... शाल्यम् उ चिच्यवौ |
| शौ ७.५२.३ ऋ ५.६०.१ | ईळे अग्निं स्ववसं नमोभिर् इह प्रसत्तो वि चयत् कृतं नः । | * * स्रुवसन् ... दयः कृत नुः |
| | रथैर् इव प्र भरे वाजयद्भि× प्रदक्षिणिन् मरुतां स्तोमम् ऋध्याम् ॥२॥ | ...वाचमदृत्यः प्रदक्षिणीर् मरुता स्तोमसृग्स्याम् |
| शौ ७.५९.२ ऋ १०.१३.५ | सप्त स्रवन्ति शिशवे मरुत्वते पिता पुत्रेभ्यो अप्य् अवीवतत् पद्वतः । | सप्तस * शिशको * * पित्रेभ्यो ... |
| | उभये पिप्रति ? उभस्य राजत उभे यतेते उभयस्य पुष्यतः ॥३॥ | * * उभयेस्य राजहि उभेतभे उभये स्य पिष्यकः |

| | | |
|---|---|---|
| | वेदस् स्वस्तिर् द्रविण[स्] स्वस्ति[×] परशुर् वेदि× परशु[र्] नस् स्वस्ति । | मेदा ... |
| शौ ७.२९.१ | हविष्कृतो यज्ञिया यज्ञकामा[स्] ते देवासो हविर् इदं जुषध्वम् ॥४॥ | |
| | उप प्रियं पनिप्नतं युवानम् आहुतीवृधम् । | * * परिप्लुतं ... |
| शौ ७.३२.१ ऋ ९.६७.२९ | अगन्म बिभ्रतो नमः ॥५॥ | |
| | इमा यास् ते शतं हिरास् सहस्रं धमनीर् उत । | * यस् * * हीनां ... |
| शौ ७.३६.२ | तासां ते सर्वासां साकम् अश्मना विलम् अप्य् अधाम् ॥६॥ | ... साकुम् अश्विना वलम् इप्य् * |
| | इदं खनामि भेषजं मांपश्यम् अभिनाकजम् ? । | * खानामि ... |
| शौ ७.३९.१^(१),२^(१) | येना निचक्र आसुरीन्द्रं रंजी ? केवलं पतिम् ॥७॥ | एना निचक्रा सुनीन्द्रा * * * |
| | अक्ष्यौ मे मधुसंकाशे [जिह्वा मे मधुसूदिनी । | अक्षौ स सध्वसङ्काश |
| पै १.५५.३ | [नसोर् अधि प्रमन्दनं दत्सु मे सारघं मधु] ॥८॥ | - - - - - |

× × × ×
× × × × ॥का॰ १॥

२०.३१

× × × ×
× × × ×

(इदं पद्यार्धं नास्ति॥ आरधास जीर्णं न लभ्यते॥)

| | | |
|---|---|---|
| शौ ७.८२.२ ऋ ७.५९.८ | यो नो मर्तो मरुतो दुर्हणायुस् [तिरश्] चित्तानि वहुधा जिघांसात् । | * * मन्तो ... जिघांसत् |
| | तस्मिन् तान् पाशान् प्रति मुञ्चता यूयं तपिष्ठेन तपसा मश्विना ? तम् ॥५॥ | * * पाशात् ... शम् |
| शौ ३ | संवत्सरीणा मरुतस् स्वर्का उरुक्षया[स्] सगणा मानुषेभ्यः । | संवत्सेरणा ... |
| | प्रासत् पाशान् प्रति मुञ्चन्तु सर्वान् सांतपना मत्सरा मादयिष्णवः ॥६॥ | प्रास्सुत् ... |
| शौ ७.८१.२ | धृषत् पिब कलशे सोमम् इन्द्र वृत्रहा शूर समरे वसूनाम् । | |
| | माध्यन्दिने [सवन] आ वृषस्व रयिस्थानो रयि[म्] अस्मासु धेहि ॥७॥ | |
| शौ ७.८३.२ | युनज्मि त्वा ब्रह्मणा दैव्येनास्मै क्षत्राणि धारयन्तम् अग्ने । | ... दैव्येनासे * धारयन्त्वम् * |
| | द्रैड्व् ? अस्मभ्यं द्रविणेह भद्रं प्रेमं वोचो हविर्दा देवतासु ॥८॥ | ... मद्रा * वोजो हविर्षा देवजसा |
| शौ १ | वि ते मुञ्चामि रशनां वि योक्त्रं वि नियोजनम् । | * * * * व्योक्तं वि नियोचनम् |
| | इहैव त्वम् अजस्र एध्य् अग्ने ॥९॥ | * * अजस्रेधाग्ने |
| शौ ७.८५.३ ऋ १०.१२१.१० | प्रजापते नहि त्वद् [एतान्य्] अन्यो विश्वा रूपाणि मंतिना ? जजान । | * * त्वद् ... |
| | यत्कामास् ते जुहुमस् तन् नो अ[स्तु] वयं स्याम पतयो रयीणाम् ॥१०॥ ॥का॰ २॥ | यत्कामस् * जुहुमस् ... वयं ... ॥२॥ |

२०.३२

| | | |
|---|---|---|
| शौ ७.८४.१ | यत् ते देवा अकृण्वन् भागधेयम् अमावास्ये संवदन्तो महित्वा । | * त देवाः कृण्वन् * अमावास्य * * |
| | सेमं यज्ञं पपुर् ? विश्ववारे रयिं नो धेहि सुभगं सुवीरम् ॥१॥ | सइमं ... सुभगां * |
| शौ ७.८७.६ | घृतं ते ऽग्ने दिव्ये सधस्थे घृतेन त्वा मनुर् अद्या सम् इन्धे । | ... द्या * इद्धे |
| | घृतं ते देवा [अ]प्य् आ वहन्तु घृतं तुभ्यं दुह्रतं गावो अग्ने ॥२॥ | |
| शौ २ | मय्य् अग्रे अग्निं गृह्णामि स[ह] क्षत्रेण वर्चसा बलेन । | * अग्ने ... |
| | मयि प्रजां मय्य् आयुर् दधामि स्वाहा मय्य् अग्निम् ॥३॥ | * * * आद् * * * आग्निः |
| शौ ७.८८.१ | अप्सु ते राजन् वरुण गृहो मिथो हिरण्ययः । | ... वरुणा गुहा मितोमितो * |
| | ततो धृतव्रतो राजा सर्वा धामा वि नो मुञ्चत् ॥४॥ | ... मुन्चे |
| शौ २ | धाम्नोधाम्नो राजन्न् अतो वरुण नो मुञ्च । | * राजन्य् * रुवण * * |
| | यद् आपो अघ्न्या इति वरुणेति यद् ऊचिम ततो वरुण नो मुञ्च ॥५॥ | * * * यति वरुणेन * टचिम ... |
| शौ ७.९२.१ | यो रुद्रो अग्नौ यो अप्स्व् अन्तर् य ओषधीर् वीरुध आविवेश । | यो रुद्रो अग्नौ यो * * या * वीरुधाविवेष |
| | य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्व् अद्य ॥६॥ | य इमा विश्वा भुवनानि चक्लुपे तस्मै रुद्राय ... |
| शौ ७.९३.१ | अपेह्य् अरिर् अस्य् अरिर् वा [अ]सि । | * * इस्य् अरिरिर् * * |
| | विषे विषम् अपृक्था विषं वा अप्रचितं जहि ॥७॥ | विष * अप्रशक्तां विष वा प्रपितं जजि |
| शौ ७.६५.१ | पृतनाजितं सहमानम् अग्निम् उग्रं हुवेम परमात् सधस्थात् । | ... उग्रं * परमस् * |
| | स नः पर्षद् अति दुर्गाणि विश्वा क्षामद् देवो ऽधि दुरितान्य् अग्निः ॥८॥ | ... क्षामाद् * * दुरितात्य् * |
| शौ ७.६८.१ | यद् अन्तरिक्षे यदि वा रजसि ततो वृक्षेषु भयम् उलपेषु । | * अन्तरिक्षं * वि रजांसि तत * भयर् अलपेषु |
| | यद् अश्रवन् पशव उद्यमानं तद् ब्राह्मणं पुनर् अस्मान् उपैतु ॥९॥ ॥का॰ ३॥ | अज् अस्रवन् ... ॥३॥ |

## २०.३३

| | | |
|---|---|---|
| शौ ७.७२.१ | शं मा वातो ऽभि वाते शं मे तपति सूर्यः । | |
| | अहानि शं भवन्तु मे शं रात्री प्रति धीयतां शम् उषा मे व्य् उच्छतु ॥१॥ | ...मे यदछतु |
| | उत् तिष्ठन् पितरो ये परासद् यन्ति सं राजानम् अवशानम् ? अर्चन्तः । | * तिष्ठद् * * पुरासद् अनि...अर्चतः |
| | अयं नृणाम् ऋते यश् श्रेष्ठ आगन् तस्मै गृहं कृणुता यावत्सबन्धु ॥२॥ | अय * नृत * श्रेष्ठा गं...°बन्धुः |
| | यस्येदं शस्यं प्रतिमाकरद् देवैर् दत्तम् अनु सूर्यं च संभृतम् । | * * प्रतिमाक्र...सम्भृताम् |
| शौ १२.२.२९[३-४] | त्रिस् सप्त कृत्व ऋषयः परेता मृत्युं प्रत्य् औहन् पदयोपनेन ॥३॥ | * * कृद्...ऊहं * |
| शौ ७.१०१.१ | अगमन् गावस् सदनम् अ[प]सद् वसति वयः । | अगमं ...नय |
| | आस्थाने पर्वता अस्थुस् स्थाने अङ्काव् अरीरमम् ॥४॥ | * * स्त्व * यन्काव् अरीरिमम् |
| | आरवो अगमन्न् आग्निधा[ना]न्य् अग्नयः । | * अगमंन्... |
| | आ वृक्षौ सम् अभित्सातां उत्सक्तमेषजम् असि ॥५॥ | ...अभिरशाताम् ... |
| शौ १.२.४ | यथा द्यां च पृथिवीं च मुञ्ज इत् तिष्ठत्य् अन्तरा । | * * * * * मुञ्जद् * * |
| | अस्याद् इदं विश्वं भुवनम् अस्याद् वचो अनुस्वयः ? ॥६॥ | ...वाचो * |
| शौ ६.४४.१[३-४], २[१-२] | अस्थुर् वृक्षा ऊर्ध्वस्वप्नास् तिष्ठाद् रोगो अयं तव । | * वृक्षाद् * * रोगो * * |
| | शतं या भेषजानि ते सहस्रं संभृतानि च ॥७॥ | * यद् ... |
| शौ २.३.२[३-४] | तेषाम् असि त्वम् उत्तमम् अनास्रावम् अरोगणम् । | * * त्वम्... |
| शौ ६.४४.२[३-४] | [श्रेष्ठम् आस्रावभेषजं] वसिष्ठं रोगनाशनम् ॥८॥ | वसिष्ठ * |
| शौ ७.१०२.१ ऋ ३.२९.१६ | यद् अद्य त्वा प्रयति यज्ञे अस्मिन् होतश् चिकित्वन्न् अवृणीमहीह । | * * त्वां प्रयति * अस्मि होतश् चिकित्वा |
| | ध्रुवम् अयो ध्रुवम् उता शविष्ठ प्रजानन् विद्वान् उप याहि सोमम् ॥९॥ | * * * अदरसि विसिष्ठ * विद्वां... [वृर्णीमहीवः |
| शौ २ ऋ ५.४२.४ | सम् इन्द्र णो मनसा नेषि गोभिस् सं सूरिभिर् हरिवन् सं स्वस्त्या । | * इन्द्रा * मेनसा नेषि...हविरे सं स्वस्त्या |
| | सं ब्रह्मणा देवकृतं यद् अस्ति सं देवानां सुमत्या यज्ञियानाम् ॥१०॥ | ... ॥४॥ |
| | ॥का° ४॥ | |

## २०.३४

| | | |
|---|---|---|
| शौ ६.५३.३ पै १९.८.३ | सं वर्चसा [पयसा सं तनूभिर् अगन्महि मनसा सं शिवेन । | सं वर्चसे इत्य् एका |
| | [त्वष्टा सुदत्रो वरिवः कृणोत्व् अनु नो मार्ष्टु तन्वो विरिष्टम् ] ॥१॥ | |
| कौशिकसूत्रे ६.९ | संस्रावभागास् तविषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश् च देवाः । | संस्रावंभागा स्तविष न बृहन्तः प्रस्तरेष्ठा बर्हिषाद |
| | इमं यज्ञम् अभि विश्वे गृणन्तु स्वाहा देवा अमृता मादयन्ताम् ॥२॥ | * * अभि...देवा... [अ देवाः |
| शौ ७.१०२.३ | यान् आवह उशतो देव देवांस् तान् प्रेरय पुनर् अग्ने स्वे सधस्थे । | * * उषतो * देवां... |
| | जक्षिवांसः पपिवांसो मधून्य् अस्मै धत्त वसवो वसूनि ॥३॥ | जक्षिवासः * वादन्य् अस्मे... |
| | अयं नो यज्ञो अप्य् एतु देवान् संत्वरं वेदिम् अप्य् एतु । | * * * मप्य् * देवां सन्तुरां * * एतुर् |
| | येभिर् विमुञ्चम् ऋत्विग् ओदनेभिर् देवा यज्ञैश् च पुनर् मे स्व दा व त् ? ॥४॥ | येभिः * ऋत्विङ्ओदनाभिर्...म * |
| शौ ५ | यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ॥५॥ | यज्ञे * * * * स्वाहं * * * |
| शौ ६ | एष ते यज्ञो यजमान सहसूक्तो नमोवाकस् सुवीर[स्] स्वाहा ॥६॥ | ...यजमानस् स्वाहासूक्त * * * |
| शौ ८ | मनसस् पत इमं देवयज्ञं स्वाहा वाचि स्वाहा वाते धाः स्वाहा ॥७॥ | मनस्पत इमन् * * वाचे * वाचदे धास् * |
| शौ ७ | स्वा[हा]हुतेभ्यो वषड् हुतेभ्यः । | * वषु हुतेभ्यः |
| | देवा गातुविदो गातुं ज्ञात्वा गातुम् इत स्वाहा ॥८॥ | * °विधो * नत्वा गातु विदस् * |
| शौ ७.१०३.१ | सं बर्हिर् अक्तं हविषा घृतेन सम् इन्द्रेण वसुभिस् सं मरुद्भिः । | * * इक्तं... |
| | सं देवेभिर् विश्वदेवेभिर् अक्तम् इन्द्रं गच्छति यत् स्वाहा ॥९॥ | ...यस् * |
| शौ १४.१.४२ | आशासाना सौमनसं प्रजां बह्वीम् अथो बलम् । | आशासानस् * प्रचो बहुर् * * |
| | इन्द्राण्या [अ]नुव्रता सं नह्ये अमृताय कम् ॥१०॥ ॥का° ५॥ | * * स नुह्ये * * ॥५॥ |

## २०.३५

| | | |
|---|---|---|
| मै सं ३.८.४ का सं ८.१७ | इन्द्राणी नारी सुभगा सुपत्न्य् उद् अंशेन पतिविद्ये बिभेद । | ...सुपत्नी इदं ग्रेनं पतिविद् ते विभेद |
| | त्रिंशद् यस्या जघनं योजनान्य् उपस्थ इन्द्रं स्थविरं [बि]भर्ति ॥१॥ | त्रिंशशुद्पस्थाव् * योजनान् * * * पिन्ति |
| | सगासि ? पृथिवी धनंजया गिन ? विश्वरूपस् सूर्यत्वक् । | |
| | इन्द्राणी प्रासाद् संजयन्ती तस्यै त एना हविषा विधेम ॥२॥ | * * * वेनाय * * |

